Colophon. इति ब्रह्मयामले शिवदुर्गासंवादे चैतन्यकल्पे षष्ठः पटलः ।

विषयः । गौराङ्गदेवजन्मकथनं, गौराङ्गदेवमाहात्म्यकथनं, गौराङ्गमन्त्रोद्धारकथनं, यमुनास्तवकथन, गौराङ्गपूजाकथनञ्च ।

---

## No. 595. अग्निसंहिता ।

Substance, country yellow paper. Folia, 3. Lines, 7 on a page. Extent, 63 s'lokas. Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rájá Rádhákánta Deva Bahádur. Appearance, new. Verse. Generally correct.

*Agni Sañhitá.* This is another spurious revelation regarding the divinity of Chaitanya, *alias* Gauráñga, *alias* Gaurachandra. Prithivi, the earth personified, oppressed by the sins of mankind, with tearful eyes besought Brahmá, the lotus-born, to devise a remedy, and that divinity, says the Sañhitá, pacified the weeping lady by assuring her that relief was at hand, as the Divine Spirit would ere long appear incarnate on earth to afford a sovereign specific for the malady of sin. In reply to further enquiries, he foretold the whole history of the life of Chaitanya. The work, I suspect, was not well received even by the Vaishnavas, for it is rarely quoted. The MS. has 24 chapters, but the absence of the word *samápta* in the colophon, induces me to think that the work in its entirety comprised some more chapters.

Beginning. रोदमाना च पृथिवी गत्वा च ब्रह्मणोऽन्तिकम् ।
सप्रश्रय पद्मयोनिन्तु वेपमानाब्रवीद्वचः ॥

End. इति निगदितमिह नेदमन्यद्विशेषं
सकलनिगमवक्त्रीशीर्षकैकप्रकाशम् ।
अखिलभुवननाथप्रेमपीयूषधारः
सरभसमपि तद्वद् गौरचन्द्रोऽवतीर्णः ॥

Colophon. इति अग्निसंहितायां गौराङ्गप्रादुर्भावो नाम चतुर्विंशतितमोऽध्यायः ।
चतुर्विंशतितमाध्यायमात्रं प्राप्तं ।

विषयः । धरण्या ब्रह्मसमीपे गमनं, ब्रह्मकर्त्तृकहरिस्तवः, गौराङ्गप्रादुर्भावश्च ।

---

## No. 596. उद्बोधचन्द्रिका ।

Substance, country yellow paper. Folia, 74. Lines, 8 on a page. Extent, 1660 s'lokas. Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rájá Rádhákánta Deva Bahádur. Appearance, old. Verse. Generally correct.

*Udbodha-chandriká.* An astrological work comprising rules for the preparation of horoscopes, &c. Some of Khaná's astrological maxims occur at the end; but the MS. is incomplete.

Beginning. आदित्यादिग्रहाः सर्व्वे नक्षत्राणि च राशयः ।
दीर्घमायुः प्रकुर्व्वन्तु यस्येयं जन्मपत्रिका ॥
विधात्रा लिखिता या तु कपालेऽक्षरमालिका ।
ज्योतिर्वित् तां विजानीते होरानिर्णयचक्षुषा ॥

End. ७४ पत्रपर्यन्तं प्राप्तं, ततः खण्डितं ।

Colophon. इत्युद्बोधचन्द्रिकायां खनावचननिर्णयो नामोनविंशोऽध्यायः ।

विषय । ज्योतिषशास्त्रमङ्गलं, जन्मपत्रिकादिलेखनसङ्केतं, वर्षगणनं, नित्यदशा, अन्तर्दशा, खनावचननिर्णयश्च ।

---

## No. 597. मुक्ताफलं ।

Substance, country yellow paper. Folia, 105. Lines, 9 on a page. Extent, 157 s'lokas. Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rájá Rádhákánta Deva Bahádur. Appearance, new. Verse. Generally correct.

*Muktáphala.* A synopsis of the Vaishnava doctrines of the Bhágavata Purána. By Vopadeva, son of Kesava, *alias* Bhishakkesava, the physician, and disciple of Dhanes'a. The author describes himself as the protegé of Hemádri, king of Deoghar. This work and another lately found by me in which the same author gives an abstract of the contents of the Bhágavata, afford strong presumptive evidence against the opinion, now generally received by European orientalists, that the Bhágavata was written by Vopadeva A much stronger proof, however, is afforded by the *Danaságara* of Ballála Sena, king of Bengal, in which the Bhágavata is repeatedly quoted. That work also quotes from the Ádi Purána, which Wilson supposed was composed within the last three centuries. Vopadeva, according to Colebrooke and Wilson, flourished between the 12th and the 13th centuries; Ballála lived in the 11th.

Beginning. विष्णुपद्यात्मकं वन्दे भक्त्याष्टादशभेदया ।
सद्भिर्वर्गीनविंशत्या भक्तैर्नवभिराश्रितं ॥
विष्णुप्रीत्या चतुर्वर्गचिन्तामण्यमजोगणत् ।
भेदान् व्रतानां दानानां तीर्थानां मोचवर्तनां ॥
मूर्त्तिप्रासादपूजानां हेमाद्रिर्गणकारणैः ।
विष्णुभक्त्यङ्गभक्तानां गणयत्युक्तमारधीः ॥
मुक्ताफलेन मन्येन मद्भागवतसूक्तिना ।
भक्तिमात्यम्बुना मुग्धमार्कण्डेयश्रियाश्रिया ॥ ४ ॥

End. विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरत् ॥
स्वर्गे गीर्वाणनाथ सुरपतिममितः शाब्दिकानां वरेण्यं
पाताले नागराजः फणिपतिमदशो यस्य गायन्ति कीर्त्तिं ।
यश्लोकैः शास्त्रपाथोनिधिमखिलमदो मन्यरत्न सुष्टत्तं
चक्रे शिष्या धनेश कविकुलतिलकः केशवर्वोपदेव ॥

Colophon. इति वोपदेवकृत मुक्ताफल समाप्तम् ।

विषय । निराकारब्रह्मलचणं, साकाराणां मत्स्यादिविष्णुवदाणां लचणं, श्रीकृष्णस्य विग्रहरूपवर्णनञ्च ।

---

## No. 598. गायत्रीतन्त्रम् ।

Substance, country yellow paper. Folia, 13 Lines, 10 on a page. Extent, 195 ślokas Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rájá Rádhakánta Deva Bahádur. Appearance, old. Verse. Generally correct.

*Gáyatrí Tantra.* A Tantra in praise of the Gáyatrí as the only means of adoration of the deity. It is written in the usual Tántric style, and gives in detail the rules to be observed in worshiping with the aid of the Gáyatrí. The MS. is a mere fragment, and I suspect it is a part of one of the larger Tantras.

Beginning. अधुना सम्प्रवक्ष्यामि गायत्रीं परमाक्षरीं ।
यज्ज्ञात्वा सर्वपापेभ्यो मुक्तो भवति मानवः ॥

End. यथाक्रमाक्षरावर्णपतितां तत्र कारयेत् ।
अग्रतश्च पश्चात् भवसन्ध्याश्रयेत् प्राप्तं । ततो यजितं ।

विषयः । गायत्रीमाहात्म्य, गायत्रीध्यान, गायत्रीन्यासः, गायत्रीहीनब्राह्मणनिन्दा, यज्ञोपवीतलक्षणं, सन्ध्यालक्षणं, गायत्रीतन्त्रप्रशंसा, तिथीनां ध्यान मन्त्रय, पञ्चयोध्यानं मन्त्रय, गायत्रीकवचञ्च ।

---

## No. 599. आचारनिर्णयः ।

Substance, country yellow paper. Folia, 6. Lines, 7 on a page. Extent, 66 s'lokas Character, Bengali Date ? Place of deposit, Calcutta, Sir Rájá Rádhákánta Deva Bahádur. Appearance, old. Verse Incorrect

*Áchâranirnaya.* A Tantra. Contents: Origin of the Káyasthas, duties of Bráhmans; anecdote of Sutapas, a Brahman, and Suyajña, a king, on the conduct of Bráhmans; propriety of the Sudras assuming the profession of Kshatríyas in the Kali Yuga; curse of Bráhmans on Chitrâñgada; encomiastic recommendations of the mantra of Vagalá

Beginning. मूयस्तोऽहं प्रवक्ष्यामि वगलेति मनूत्तमं ।
यस्य ग्रहणमात्रेण कायस्थो विप्रसेव च ॥

End. केवलं पटलमिदं पठन् शृण्वन् मनोरथ ।
लभेत् काल्लीपुः सुत्वा वगलाय म मसय ॥

Colophon. इति आचारनिर्णये वाह्रदेवसम्भवे हरपार्व्वतीसम्वादे पञ्चविंशत्तम पटल. ।
पञ्चविंशत्पटलमात्र प्राप्तम ।

विषय । कायस्थोत्पत्तिकथन, विप्रकर्त्तव्यनिरूपण, सुयज्ञराजानं प्रति सुतपोविप्रस्योपदेश, कलियुगे शूद्रस्य क्षत्रियकर्मकारित्वकथनं, चित्राङ्गदं प्रति ब्राह्मणानामभिशाप, वगलामन्त्रजपमाहात्म्य ।

---

## No. 600. मूर्खहा ।

Substance, country yellow paper. Folia, 160. Lines, 6 on a page. Extent, 1120 s'lokas Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rájá Rádhákánta Deva Bahádur Appearance, old. Prose. Generally correct.

*Murkhahá* A Smárta treatise, comprising dissertations regarding various penances, expiations and religious observances The MS is incomplete, and the author's name is not ascertainable.

Beginning. पाप' मद्गुप्त्यानामेव कर्म्मणामारम्भ । तत्रादौ म एव निरूप्यते ।

End इति गोवधप्रायश्चित्तपत्रलेखनप्रकारः । इत पर खण्डित ।

विषय । मुनीना सङ्ग्रह, अर्थात् नानाविधवचनप्रदर्शनेन नानाविधव्रतपूजाश्राद्धादीना प्रायश्चित्तानाञ्च व्यवस्थापन ।

---

## No 601 उपमानखण्ड ।

Substance, country yellow paper Folia, 5 Lines, 8 on a page, Extent, 90 slokas Character, Bengali Date ? Place of deposit, Calcutta, Sir Rajá Radhakanta Deva Bahádur Appearance, old. Prose Generally correct

*Upamanakhanda* The third part of the great work of Gangesa Upadhyáya, on the Nyáya It comprises the portion on comparison Vide ante I p 285

Beginning. अथोपमान निरूप्यते । तत्र सादृश्यप्रमाकरणमुपमानमिति केचित् । सादृश्यञ्च पदार्थान्तर ।

End अथ वाक्यादेवानेन परिच्छिन्न केवलमप्रेऽप्यभिजातियोगेनेदंगवयपदवाच्य लेनावगत ।

Colophon इति

विषय । उपमानखण्डस्य मूललक्षणादि ।

---

## No 602 न्यायरत्नावली ।

Substance, country yellow paper. Folia, 121 Lines, 7 on a page Extent, 1957 slokas Character, Bengali Date ? Place of deposit, Calcutta, Sir Raja Radhákanta Deva Bahadur Appearance, modern Prose Corrupt

*Nyáyaratnávali* An elementary treatise on the principles of the Nyáya Philosophy By Krishnakanta Vidyavágis'a This is a very different work from the one of this name by Brahmananda Sarasvatí, noticed by Mr Hall *Contributions*, 109

Beginning नव्यप्राचीनतार्कीनमर्वाथींधीनधीमता ।
तन्यते हृष्यकान्तेन न्यायरत्नावली मता ॥

End समर्गाभावो द्विविध, अत्यन्ताभावध्वसभेदात् । इत्यभाववादः समाप्तः ।

Colophon श्रीकृष्णकान्तविद्यावागीशविरचिता न्यायरत्नावली समाप्ता ।

विषय । न्यायशास्त्रीयसारसङ्ग्रह ।

---

## No 603 न्यायरत्नप्रकाशिका ।

Substance, country yellow paper Folia, 21 Lines, 7 on a page Extent, 420 s'lokas Character, Bengali Date ? Place of deposit, Calcutta, Sir Rájá Radhakánta Deva Bahádur Appearance, new Prose Generally correct

*Nyáyaratnaprakás'iká* Annotations on the scholia of Brahmánanda Sarasvati, entitled *Nyáyaratnavali*, on Madhusudana Sarasvati's commentary on S'ankara's essence of the Vedanta, the Das'as'loki By Krishńakánta Nyayaratna. The MS is incomplete

Beginning योगेश क गत चिर हिमवच शृङ्गे कुटीरे प्रिये

योगार्थं किमुतालि कोचरमणो तवेति सभाषणं ।

श्रुत्वा हासमन्वित गिरिसुतागौरीशयोर्मनका

तवास्मीति वदन् सलज्जवदनो मा पातु लम्बोदर ॥

न्यायरत्नावलीटीका तनु नत्वा च नीलिका ।

तनोति श्रीकृष्णकान्तो न्यायरत्नप्रकाशिका ॥

End ९१ पत्रमात्र प्राप्त । मत खण्डित ।

विषय । न्यायरत्नावलीग्रन्थस्य टीका ।

---

## No 604 शब्दरूपप्रकाशिका ।

Substance, country yellow paper Folia, 25 Lines, 7 on a page Extent, 525 s'lokas Character, Bengali Date ? Place of deposit, Calcutta Sir Rája Radhakanta Deva Bahadur Appearance, new Prose Generally correct

*S'abdarúpaprakas'ika* Sanskrit declensions Anonymous

Beginning श्रीरामचरणे नत्वा नामानि लिखति क्रमात् ।

शब्दानामज्ञमन्नाना कृपाण्न्यधिया कृते ॥

रामशब्द श्रीरामचन्द्रवाचो पुंसि । राम रामौ रामा ।

End च वा चाचे वेति ।

Colophon शब्दरूपप्रकाशिका समाप्ता ।

विषय । भाषिताज्ञसन्तपदानां समूह ।

---

## No 605 चन्द्रालोकः ।

Substance, country yellow paper Folia, 11 Lines, 4 on a page Extent 168 s lokas Character, Bengali Date ? Place of deposit, Calcutta Sir Raja Radhákanta Deva Bahadur Appearance, old Verse Generally correct

*Chandraloka* An elementary treatise on Rhetoric By Jayadeva A MS in the possession of Babu Piyárimohana Prabhu of Dacca contains short annotations on the text, said to be by the author himself

Beginning परस्परतपःसम्पत्तफलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥
अलङ्कारेषु बालानामवगाहनसिद्धये ।
ललितः क्रियते तेषां लक्षलक्षणसङ्ग्रहः ॥

End चन्द्रालोकाभिधानोऽयं जयदेवेन निर्म्मितः ।
विपश्चितां मुदे भूयादलङ्कारस्य सङ्ग्रहः ॥

Colophon समाप्तोऽयं चन्द्रालोकालङ्कारः ।

विषय । अलङ्काराणां लक्षणं, उदाहरणञ्च ।

---

## No 606 शृङ्गारादिरसः ।

Substance, country yellow paper Folia, 8 Lines 6 on a page Extent, 108 s'lokas Character, Bengali Date ? Place of deposit, Calcutta Sir Raja Radhakanta Deva Bahadur Appearance, old Verse Generally correct

*Sringaradirasa* The eight passions described. Anonymous The MS is incomplete

Beginning शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसञ्ज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥

End ८ पत्रमात्र शान्, अथ नास्ति ।

विषय । शृङ्गाराद्यष्टविधरसानां लक्षणमुदाहरणञ्च ।

---

## No 607 शूद्रधर्म्मतत्त्व ।

Substance country yellow paper Folia 97 Lines, 9 on a page Extent, 2619 s'lokas Character Bengali Date ? Place of deposit, Calcutta Sir Raja Radhakanta Deva Bahadur Appearance, old Partly verse and partly prose Generally correct

*S'údradharma Tattva.* A manual of the whole religious and social duties of Súdras. By Kamalákara Bhatta, son of Rámkrishna. The work is of considerable repute, but of rare occurrence.

Beginning. प्रणम्य रामं पितरं कमलाकरशर्म्मणा ।
रामकृष्णतनूजेन शूद्रधर्म्मो वितन्यते ॥

End. योऽत्र श्रम: किल कृत: कमलाकरेण प्रीतोऽस्तुनामसुकृतीषु च रामकृष्ण: ।

Colophon. इति रामकृष्णभट्टात्मजकमलाकरभट्टकृते शूद्रधर्म्मतत्त्वे शूद्रसमयकृत्यजलस्वरूपनिरूपण ।

विषय: । शूद्राणां समस्तधर्म्माणां विवरणं, अर्थात् अन्नप्राशन-विवाह-प्रायश्चित्तादिषु शूद्रेतिकर्त्तव्यतानिरूपण ।

---

## No. 608. मत्स्यसूक्ततन्त्रं ।

Substance, country yellow paper. Folia, 99. Lines, 10 on a page. Extent, 3960 s'lokas. Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rájá Rádhákánta Deva Bahádur. Appearance, old Verse. Generally correct.

*Matsyasúkta Tantra.* A Tantric compilation. Contents: Rules regarding mourning; expiations and aliment; rice cooked by S'údras, forbidden as food for Bráhmans; effect of certain conjunctions during particular days of the moon's age; vessels of particular metals recommended to be used when eating while facing particular quarters; duties before meals; purification of houses rendered impure by corpses and other offensive objects; the worship of Bhadrakáli and other divinities in the month of Vais'ákha; rules for the celebration of a ceremony called *Anantavrata*, on the 14th of the waxing moon in the month of Bhádra; do. of the *Rohinívrata*, on the 9th of the waxing moon in the same month; praise of particular forms of sacrificial knives; proper mode of sacrificing animals; prognostications from the flow of blood from the carcass of sacrificed animals; adoration of Durgá; celebration of the ceremony called *Gaurívrata;* mantra for saluting the wag-tail *(motacilla alba);* mantra for offering oblations of water to the manes on the 8th of the waxing moon in the month of Mágha; salutary verses called *Mangaláshṭaka;* origin of the Mandára mountain. The MS. is a fragment, and contains from the 35th to the 60th sections. The contents above given refer to the sections examined.

Beginning. मरणजापात् देवेशि नाशौच स्तसूतके ।
जनने मरणे नित्यमशौचमनुधावति ॥

End. पञ्चविंशत्पटलावधिपञ्चपटलपर्य्यन्तं प्राप्तं, ततः खण्डितं ।

विषयः । धर्म्मोऽव्यवस्था, प्रायश्चित्तविधानं, द्रव्याणां भक्ष्याभक्ष्यविधानं, शूद्राद्यादि-भोजने ब्राह्मणानां पापकथनं, तिथीनां युग्मायुग्मभेदेन व्यवस्थाकथनं, पूर्व्वादिदिग्भेदेन स्वर्णादिपात्रभेदेन भोजने दोषादोषकथन, भोजनस्यादौ कर्त्तव्यकर्म्मनिरूपणं, शवादिदूषितस्पृष्टद्रव्यशुद्धिकथनं, कुशण्डिकानिरूपणं, वैशाख मासादौ भद्रकाल्यादिदेवतापूजनफल, अनन्तव्रत, रोहिणीव्रतं, खड्गस्य विशेषप्रशंसा, पशुच्छेदनप्रकारः, रुधिराधारनिर्णयः, दुर्गाध्यानं, तस्याः स्तव, तस्या शारदीयपूजनञ्च, गौरीव्रतं, खञ्जनप्रणाममन्त्रः, भीष्मतर्पणमन्त्र, मङ्गलाष्टक, मन्दरपर्वतोत्पत्तिकारणं ।

---

## No 609. सप्तशतीव्याख्यानं ।

Substance, country yellow paper. Folia, 40 Lines, 9 on a page. Extent, 1230 s'lokas Character, Bengali. Date ? Place of deposit, Calcutta, Sri Rájá Rádhakánta Deva Bahádur. Appearance, old. Prose. Incorrect

*Saptas'ati-vyákhyána.* A commentary on the Saptas'atí or Chandi section of the Márkandeya Purána. By S'iva Bhatta Kála The most approved commentary on the Chandi is by Nágoji Bhatta, who has appended to his work a dissertation on the rules regarding the reading of the Chandi and the details of the Durgá pujá.

Beginning. (प्रारम्भे खण्डित)

End. कीलकोक्तप्रकारेण ज्ञानं सूचितं, सर्व्वेष्टसिद्धि ।

Colophon. इति कालोपनामकश्रीशिवभट्टकृते सप्तशतीव्याख्याने त्रयोदशोऽध्यायः ।

विषयः । सप्तशत्यभिप्रायार्थव्याख्याटीका ।

---

## No 610. व्रजभक्तिविलासः ।

Substance, country yellow paper Folia, 13 Lines, 14 on a page. Extent, 4435 s'lokas Character, Bengali. Date S K. 1762. Place of deposit, Calcutta, Sir Rájá Rádhakánta Deva Bahadur. Appearance, old. Verse. Generally correct

*Vrajabhaktivilása.* The topography of Vraja, describing its groves, pools, bowers, and all places of note in connection with the career of Krishna in that town; and the religious merit of visiting its sacred spots By Náráyana Bhatta, son of Bháskara.

Beginning. राधया सहितं कृष्णं ह्लादिनीयं स्वमिष्टकं ।
रेवतीसहितं देवं बलदेवं हलायुधं ॥
कुर्वेऽहं पद्मसं गोप्य वनयात्राप्रभाकरं ।
व्रजभक्तिविलासाख्य व्रजमाहात्म्यदर्शितं ।

End. माहात्म्यपूर्वेश परिक्रम प्राभं ग्रन्थः प्रपूर्णो व्रजभक्तिभासकः ।

Colophon. इति श्रीमद्भास्करात्मजश्रीनारायणभट्टविरचिते व्रजभक्तिविलासे परमहंसमहितेोदारस्त्रे व्रजमाहात्म्यनिरूपणे वनयात्राप्रसङ्गिके त्रयोदशोऽध्यायः ।

विषय। वृन्दावनस्थानां काम्यादिद्वादशवनानां चक्षुः माहात्म्यञ्च, द्वादशोपवनसदधिदेवताकथनं, तत्तद्वनाधिपतिदेवानां मन्त्राः, मथुरोत्पत्तिः, गोवर्द्धनोत्पत्तिमाहात्म्यं, नानाविधपुराणवचनैर्व्रजधामान्तर्गतस्थानादिमाहात्म्यकथनं ।

---

## No. 611. वैद्यकुलतत्त्वं ।

Substance, country yellow paper. Folia, 40. Lines, 8 on a page. Extent, 960 s'lokas. Character, Bengali Date ? Place of deposit, Calcutta, Sir Rájá Rádhákánta Deva Bahádur. Appearance, new. Verse. Generally correct.

*Vaidyakula-tattva.* Genealogy and history of the Vaidyas of Bengal. By Bharata Mallika, son of Gauránga. Vide ante Vol. I. for several works of this author and remarks on his life

Beginning नत्वा शिवं शिवकरं शिवया समेतं वाणीं गुरुं द्विजगणं भिषजां गुरुञ्च ।
गौराङ्गमल्लिकसुतो भरतो विनीतो वैद्याज्ञया वदति वैद्यकुलस्य तत्त्वं ॥

End. ४० पत्रमात्रं प्राप्तं, शेषं खण्डितं ।

विषयः। वैद्यानां कुलकथनं ।

---

## No. 612. कुलदीपिका ।

Substance, country yellow paper. Folia, 17. Lines, 10 on a page. Extent, 570 s'lokas. Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rajá Rádhakánta Deva Bahádur Appearance, new. Verse. Generally correct.

*Kuladipiká.* Genealogy and history of the Kulina Káyasthas of Bengal. By Rámánanda Sarmá. The MS. is incomplete.

Beginning. नत्वा मां भारतीं देवीं तथैव कुलदेवतां ।
क्रियते नियमेनेव शूद्राणां कुलदीपिका ॥

नानाशास्त्र समालोक्य तथैव कुलशास्त्रकं ।

प्रियाणां प्रति बोधाय श्रीरामानन्दशर्म्मणा ॥

End. १९ पत्रमात्र प्राप्त, शेष खण्डित ।

विषय । शूद्राणां कुलकथनं, तेषामुत्पत्तिश्च ।

---

## No 613 मनोदूतः ।

Substance, country yellow paper Folia, 8. Lines, 7 on a page. Extent, 209 s'lokas Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rajá Radhákánta Deva Bahádur Appearance, old. Verse Generally correct.

*Manodúta.* A poem in imitation of the "Messenger Cloud" of Kálidása, in which the poet directs his own mind to go to the feet of Krishna and relate his feelings and aspirations. Anonymous. The first leaf of the MS. is wanting.

Beginning. १ (पत्रं नास्ति)

End. वस्तुत्वमेव हृदयाख्यपथप्रपन्नं सत्यं रिपुर्विषयमासितया त्वमेव ।

तत्कातरे मयि विधेहि कृपां यदेतदुक्तं कुरुष्व सुरवैरिपदे रमस्व ॥

Colophon. इति मनोदूताख्यकाव्यं समाप्तम् ।

विषयः । कश्चिज्ज्ञानी मनो दूतं कृत्वा कृष्णचरणसमीपे गन्तुं तत्प्रति उपदिशति ।

---

## No 614. मन्त्रसारीयकौतूहलविद्या ।

Substance, country yellow paper. Folia, 5. Lines, 9 on a page Extent, 149 s'lokas Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rájá Rádhákánta Deva Bahadur Appearance, old Generally correct.

*Kautuhala-vidyá* On *Indrajála* or magic. By Nítyanátha, son of Párbatí. This is a chapter of the author's *Mantrasára*, "the Essence of Mantras," a tantric compilation The author depends mainly on incantations to effect his magical experiments.

Beginning. अथातः सम्प्रवक्ष्यामि ऐन्द्रजालमनुत्तमं ।

व्याधिदारिद्र्यहरणं जरामरणनाशनं ॥

End. ॐ ऐं ह्रीं क्लीं श्रीं फट् स्वाहा अनेन मन्त्रेण सर्व्वयोगानभिगम्य मन्त्रसिद्धिः ।

Colophon. इति श्रीपार्व्वतीपुत्रश्रीनित्यनाथविरचिते सिद्धखण्डे मन्त्रसारे कौतूहलविद्या नाम ऐन्द्रजालं समाप्तम् ।

विषयः । कपोत-छाग-मयूर-जनकनानाविधौषधकथनं, वशीकरणमन्त्रादिकथनञ्च ।

---

## No. 615. कीचकवधमहाकाव्यम् ।

Substance, country yellow paper. Folia, 11. Lines, 7 on a page. Extent, 226 s'lokas. Character, Bengali. Date ? Place of deposit, Calcutta, Sir Rájá Rádhákánta Deva Bahádur. Appearance, old. Verse. Generally correct

*Kíchaka-badha.* An epic poem founded on an episode of the Mahábhárata. By Nítavarmá. During the sojourn of the Pándus in the court of Viráṭa, king of Matsya, Kíchaka, the brother of the queen, attempted to commit a criminal assault on Draupadí, the wife of the Pándus, and Bhíma, resenting the affront, killed him. This forms the subject of the poem. The work is written in a highly artificial style, and is full of alliterations, besides having the same word used in different senses at the end of every two lines.

Beginning. जितः सुचरितच्छेदोद्यरोऽयं दुःसहो मया ।
इतीव देवमकरोद्भिन्नं यः सदोमया ॥ १ ॥
बिभर्त्ति हारमन्वयं यो भक्तिभिरद्दिंमितं ।
तेजय मन्मथशरैरिन्द्रियार्थैरद्दिमितं ॥ २ ॥
या त्रिलोकलता मूर्त्तिस्तपायेन जुगोप तां ।
योऽवहत् कंसनिधनप्रयुक्ताद्भुजगोपतां ॥

End. इति भवतु दशा नयादितानां सकलमहोत्सवभूतवादितानां ।
रसशमुदयादहीयमानः सकलधराधरधारणादहीयमानः ॥

Colophon. श्रीनीतवर्म्मविरचिते कीचकवधे महाकाव्ये पञ्चमः सर्गः ।

विषय । अथ यमकेन रचिताधिकारः । द्रौपदीरूपवर्णनं, कीचकदमन, उत्तरगोग्रह-युद्धविवरणञ्च ।

---

## No. 616. सङ्ग्रहः ।

Substance, country yellow paper. Folia, 124. Lines, 5—6 on a page. Extent, 1511 s'lokas. Character, Bengali. Date ? Place of deposit, Krishnanagar, Rámakrishna Majumdár. Appearance, old. Incorrect.

*Sangraha.* A collection of formulas for the preparation of various kinds of compound medicines; in short, a native pharmacopœa. Anonymous.

Beginning पृथ्वी कीलालवह्निश्वसनखतनुभिर्निष्ठति व्याप्य विश्वं
विश्वेषा विघ्नपूतानतिविपुलवलन्दो(?)नरेन्द्रान विदन्तुं ।
यो धत्ते मूर्तिमष्टौ स्वजविदुरायामरे समुताया
तामीडे खेष्टसिद्ध्यै तनुविदितरटे यान्ति दोषाग्नितुल्या ॥
ईषद्दास्य वदति मधुरं बान्धवैः श्रिस्यमाणो
वारं वारं लुठति धरणौ मध्यता मा तु जानु ।
माता तस्य प्रवदति मुहुः पश्चिपद्वीति वाणी-
मेव गोपीगणपरिवृत बालगोपालमीडे ॥

End चन्द्रप्रभागुटिका । (परिसमाप्तिवाक्यं नास्ति) ।

विषयः । पञ्चभद्र', अमृताष्टका, अग्यावलेह', दशमूल, षडाद्याङ्ग, भैरवेश्वर', उन्मत्ताख्यरस, निर्दिग्धिकादि, भार्ग्यादि, विङ्गुलेश्वर, शीतभद्दिरस, ज्वरमुरारि', मधुकादिप्रभृतय श्चौषधा निरूपिताः ।

---

## No. 617. सारचन्द्रिका ।

Substance, country yellow paper. Folia, 32. Lines, 6—7 on a page Extent, 784 s'lokas. Character, Bengali. Date ? Place of deposit, Krishnanagar, Rámakrishna Majumdar. Appearance, old. Verse Incorrect

*Sárachandriká* General principles of pathology and therapeutics Contents: Disease defined; diagnosis; infection and contagion; symptomatology; examination of the tongue, examination of the urine; examination of the nostrils; examination of the pulse; duration of diseases; actual cautery; purgation; enemas; fumigation, &c. Anonymous.

Beginning. प्रणम्य परमानन्दद्वन्दकन्द गुरोः पदं ।
मन्दधीमाधुबोधाय साध्यते सारचन्द्रिका ॥
धर्मार्थकाममोक्षाणामारोग्य मूलमुत्तमं ।
रोगास्तस्यापहन्तारः श्रेयसो जीवितस्य च ॥

End. बालस्य नारिकेलस्य अम्लं प्रायो विरेचनं ।
नारिकेलोदक जीर्णं विष्टाशि यक्र...... ॥ इत्यतः खण्डितम् ।

विषय । रोगनिरूपण, ज्ञानयानि, सङ्कीर्णाधिकारः, शारीरिकाधिकार, जिह्वापरीक्षा, मूत्रपरीक्षा, नासिकापरीक्षा, नाडीपरीक्षा, परिमाणनिरूपण, दाहकर्म, भेदिका वटिका, वस्तिकर्मनिरूपण, धूमपाननिरूपण, इत्यादयो निरूपिताः ।

---

## No 618 आयुर्वेदागमनं ।

Substance, country yellow paper Folia, 18 Lines, 5—6 on a page, Extent, 433 s'lokas Character, Bengali Date ? Place of deposit, Krishnanagar, Ramakrishna Majumdar Appearance, old Verse Incorrect

*Ayurvedágamana* History of Hindu medicine from its origin, to the day of the author The earliest professors of the art, according to this work, were successively Brahmá, Daksha, Indra, A'treya, Bháradvaja and Dhanvantari. The MS is incomplete, and the author's name is not ascertainable

Beginning गजमुखममरप्रनर सिद्धिकर विघ्नहर्त्तार ।
गुरुमागमनयनप्रदमिष्टकरीमिष्टदेवता वन्दे ॥
आयुर्वेदागमन क्रमेण येनाभवत भूमौ ।
प्रथम लिखामि तमद्य नानातन्त्राणि सदस्य ॥

End रजोगुणमय सूक्ष्म शीतो रूक्षो(?) लघुचल ।
खरो मृदुर्योगवाही सयोगा . . ॥ इत्यत खण्डित ।

विषय । आयुर्वेदस्य लक्षण, ब्रह्मप्रादुर्भाव, दक्षप्रादुर्भाव, इन्द्रप्रादुर्भाव, आत्रेय-प्रादुर्भाव, भारद्वाजप्रादुर्भाव, धन्वन्तरिप्रादुर्भाव, दृष्टिप्रकरणादिश्च वर्णित ।

---

## No 619 ऋग्वेदीयाभ्युदयिकश्राद्धम् ।

Substance, country yellow paper Folia, 13 Lines, 6 on a page. Extent, 234 s'lokas Character, Bengali Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani Appearance, old. Prose Correct

*Rigvediyábhyudayika s'ráddha* A manual of the s'ráddha to be performed on the marriage day for the gratification of the manes It follows the ordinances of the Rig Veda Anonymous

Beginning तत्र पूर्व्वदिने निरामिष सकृद् भुक्ता स्नात प्रातर्निर्वर्तितनित्यकृत्यो धौते वाससी परिधाय उपवीती प्रक्षालितपाणिपाद प्राङ्मुख आसने उपविश्य द्विराचम्य सजलेन आद्योपद्रव्यप्रोक्षण कृत्वा पुण्डरीकाक्ष स्मृत्वेत्यादि ।

End ततस्तद्विष्णोरिति विष्णु स्मरेत ।

Colophon इति ऋग्वदिना नान्दीमुखश्राद्धे समाप्त ।

विषय । नान्दीमुखश्राद्धानुष्ठानविधान ।

---

## No. 620. आत्मानात्मविवेकः ।

Substance, country yellow paper. Folia, 5. Lines, 3—8 on a page, Extent, 110 s'lokas Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Nímachandra S'iromani. Appearance, old. Verse Correct.

*A'tmánátmaviveka.* A concise epitome of the distinctive characters of matter and spirit. By S'ankara A'chárya. Mr. Hall notices a work of this name and nature by Svayam-prakás'a Yogindra. *Contributions*, 131.

Beginning. दृश्यं सर्व्वमनात्मा स्याद् दृगेवात्मा विवेकिन ।
आत्मानात्मविवेकोऽयं कथ्यते ग्रन्थकोटिभिः ॥
आत्मानात्मविवेकः कथ्यते । आत्मनः किं निमित्तं दुःखं शरीरपरिग्रहनिमित्तं ।

End. एवं नित्यशुद्धबुद्धिमुक्तस्वभावब्रह्माहमस्मीति असम्भावना-विपरीतभावना राहित्येन यस्तु जानाति स जीवन्मुक्तो भवति ॥

Colophon. इति श्रीमच्छङ्कराचार्य्यविरचित आत्मानात्मविवेकः समाप्त ॥

विषयः । बन्धमोक्षजीवन्मुक्त्यादिव्यवस्थापनम् ।

---

## No. 621. कविरहस्यं ।

Substance, country yellow paper. Folia, 20. Lines, 3—5 on a page. Extent, 180 s'lokas Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Nímachandra S'iromani. Appearance, old Prose and verse. Correct.

*Kavirahasya.* Conjugation of the verbs of the first class, *Bhádigana.* It is intended to serve as a hand-book to poets in search of synonyms and optional forms. By Haláyudha, minister of king Lakshmana Sena of Bengal.

Beginning. जयन्ति मुरजित्पादनखदीधितिदीपिकाः ।
मोहान्धकारविध्वंसान्मुक्तिमार्गप्रकाशिकाः ॥
लोकेषु शास्त्रेषु च ये प्रसिद्धाः काव्येषु ये सत्कविभिः प्रयुक्ताः ।
उद्दिश्य तान्धित्तविनोदनाय शब्दानहं धातुभिरुद्धरामि ॥

End. परिसमाप्तमवाप्तगुणोदयं कविरहस्यमिदं रसिकप्रियं ।
सदभिधानविधानहलायुधद्विजवरस्य कृतिः सुकृतात्मनः ॥

Colophon. इति महामहोपाध्यायश्रीहलायुधकृतं कविरहस्याख्यं समाप्तं ॥

विषयः । वैयाकरणसम्मतभ्वादिगणपठितधातुविवेकः ।

## No 622. ऋग्वेदीयदशकर्मपद्धतिः ।

Substance, country yellow paper. Folia, 60. Lines, 3—6 on a page. Extent, 1012 s'lokas. Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani. Appearance, old. Prose. Correct.

*Rigvediya-das'akarma-paddhati.* A guide to the performance of the ten sacraments or sanskáras enjoined in the Rig Veda. The work follows the rules of As'valáyana. By Kâles'a

Beginning. नारायणं नमस्कृत्य नमस्कृत्य गुरोः पदं ।
निरूप्य यत्नतः सूत्रमाश्वलायनदर्शितं ॥
कालेशिना पण्डितेन स्मृतिन्यायार्थदर्शिना ।
ऋग्वेदिनां निषेकादौ पद्धतिः क्रियते शुभा ॥

End. स्वयं यथासुखं भुञ्जीत एतस्यावश्यकम् ।

Colophon. इति महामहोपाध्यायश्रीकालेशविरचिता ऋग्वेदिनां दशकर्मपद्धतिः समाप्ता ।

विषयः । गर्भाधानादिदशविधसंस्कारानुष्ठानविधानं ।

---

## No. 623 विधिस्वरूपविचारः ।

Substance, country yellow paper. Folia, 14. Lines, 6—7 on a page. Extent, 388 s'lokas Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani. Appearance, old Prose. Incorrect

*Vidhi-svarúpa-vichára.* A dissertation on the nature and characteristics of ordinances or rules enjoining actions Speech is divided into three classes; viz. 1st, such as enjoin an action, *vidhi*, injunctive; 2nd, such as prohibit an action, *nishedha*, prohibition; and 3rd, such as describe an action, *arthaváda*, descriptive. The first class is surveyed from a Nyáya stand-point. Anonymous.

Beginning. विधिनिषेधार्थवादभेदेन वाक्यं त्रिविधं । तत्र प्रवर्त्तकवाक्यं विधिः । ओदनकामः पचेत् स्वर्गकामो यजेदित्यादौ लौकिकालौकिकवाक्यानां प्रवर्त्तककर्त्तव्यताज्ञानेन प्रवर्त्तकत्वाद् विधित्वं ॥

End. सामान्याङ्गतया तद्विधायकवाक्यस्य एकवाक्यतानुरोधात् उत्तैकीभावरूपाङ्गविधायकत्वमुपेयतामिति दिक् ।

Colophon. इति विधिस्वरूपविचारः ॥

विषयः । नैयायिकाभिप्रेतविधिवाक्यतात्पर्य्यार्थविवरणं ।

---

## No. 621. बालबोधकः ।

Substance, country yellow paper. Folia, 19. Lines, 5—6 on a page Extent, 16 s'lokas Character, Bengali Date ? Place of deposit, Krishnanagar, Paṇḍit Nímachandra S'iromaṇi. Appearance, old. Prose Incorrect.

*Bálabodhaka.* A compendium of expiations or *práyaschitta.* Expiations for the following offences are particularly noticed: murder of Bráhmans; drinking of spirituous liquors; theft of gold; incest with the wife of a spiritual guide, association with outcasts; venial offences called *anupátaka*, destruction of cows, murder of Kshatriyas, &c.; murder of women; causing of miscarriage or abortion; killing of elephants, horses, &c; killing of cats, &c; killing of birds; killing of vertebrate and invertebrate animals; felling of trees; destruction of gardens, houses, temples, &c.; killing of animals for food; eating of forbidden food; eating of rice cooked by S'udras; eating of rice cooked by Chandálas; eating of improper rice; eating of meat not duly sacrificed, or unfit to be used; eating of meat on forbidden days; eating of fish. By Anándachandra. The MS. is incomplete.

Beginning. प्रणम्य पार्व्वतीनाथ प्रायश्चित्तोपमारकं ।
आनन्दचन्द्रो विप्रेन्द्रः कुरुते बालबोधकम् ॥
पापक्षयमात्रसाधनं कर्म्म प्रायश्चित्तम्। तथा च निश्चितपापक्षयेतरसाधनताप्रयोज्यत्वे सति पापक्षयसाधनता प्रयोज्या या कृतिस्तद्विषयत्वं । अथवा निश्चितपापक्षयेतरविषयकेच्छाजन्यप्रवृत्त्यविषयकत्वे सति पापक्षयविषयकेच्छाजन्यप्रवृत्तिजन्यत्वं वा प्रायश्चित्त ॥

End. क्षत्रियादीनां स्वजातीयाशौचे षड्भिर्न्यूना पादपादहानिः ।
परिसमाप्तिवाक्यं नास्ति ।

विषय । प्रायश्चित्तलक्षणं, ब्रह्मवधप्रायश्चित्तं, सुरापानप्रायश्चित्त, सुवर्णस्तेयप्रायश्चित्तं, गुर्व्वङ्गनागमनप्रायश्चित्तं, पतितसंसर्गप्रायश्चित्त, अनुपातकप्रायश्चित्तं, गोवधप्रायश्चित्तं, क्षत्रियादिवधप्रायश्चित्त, स्त्रीवधप्रायश्चित्तं, गर्भवधप्रायश्चित्त, गजाश्वादिवधप्रायश्चित्त, मार्जारादिवधप्रायश्चित्तं, पक्षिवधप्रायश्चित्तं, सास्थ्यनस्थिवधप्रायश्चित्तं, वृक्षच्छेदनप्रायश्चित्त, मण्डपोद्यानदेवतागारादिभेदनप्रायश्चित्त, हिंसाप्रायश्चित्त, भक्ष्याभक्ष्यप्रायश्चित्तं, शूद्रान्नभक्षणप्रायश्चित्तं, चाण्डालान्नभक्षणप्रायश्चित्त, कुभोज्यान्नभक्षणप्रायश्चित्तं, वृथामांसादिभक्षणप्रायश्चित्तं, सामान्याभक्ष्यमांसभक्षणप्रायश्चित्तं, निषिद्धतिथिमांसभक्षणप्रायश्चित्त, मत्स्यभक्षणप्रायश्चित्तादिकञ्च अभिहितं ॥

## No. 625. तत्त्वार्थकौमुदी ।

Substance, country yellow paper. Folia, 38. Lines, 5—7 on a page. Extent, 1197 s'lokas. Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Nímachandra S'iromaṇi. Appearance, rotten. Prose. Incorrect.

*Tattvártha-kaumudi.* A commentary on the *Práyas'chitta Viveka* of Súlapáṇi. By Govindánanda, brother of Ganapati Bhatta. The MS. is incomplete.

Beginning. श्रीगोविन्दपदद्वन्द्वमिन्दिरानन्दमन्दिरं ।
वन्दे वृन्दारकावृन्दशिरोमन्दारवृन्दरम् ॥
येन ज्योतिषपङ्कजेषु नितरां मार्त्तण्डविद्यायित
श्रीगोविन्दपदारविन्दयुगले लीलामवाल्लायित ।
वेदान्तश्रुतिसन्ततिविषयगोत्रे हि(?) मादायित
केषां नो परिसीलितो गणपतिर्भट्टः सतामग्रिमः ॥
गोविन्दानन्दकृतिना सतनूजेन तन्यते ।
प्रायश्चित्तविवेकस्य टीकातत्त्वार्थकौमुदी ॥

End. उक्ता हि साचित्ये हि द्विवचनवङ्कवचने द्वन्द्वसमासः । इतः परं खण्डितं ।

विषयः । शूलपाणिमहामहोपाध्यायकृतप्रायश्चित्तविवेकतात्पर्यार्थव्याख्यान ।

---

## No. 626. यजुर्वेदीयमासिकश्राद्धप्रयोगः ।

Substance, country yellow paper Folia, 3. Lines, 6—8 on a page. Extent, 64 s'lokas. Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromaṇi. Appearance, new. Prose. Incorrect.

*Yajurvedi-másika-s'ráddha-prayoga.* A guide to the performance of the mensual s'ráddhas, or offering of funeral cakes to the manes, according to the rules of the Yajur Veda. This work follows the directions of Váchaspatí Mis'ra.

Beginning. अथ वाचस्पतिमिश्रमतः यजुर्वेदिनां मासिकश्राद्धप्रयोगः । तत्रादौ भोज्योत्सर्गं कृत्वा एष गन्ध ॐ यज्ञेश्वराय श्रीविष्णवे नमः, इत्यादिक्रमेणाग्रभाग दत्वा ॐ शङ्खचक्रधरं विष्णुमित्यादि ।

End. ॐ देवताभ्यः पितृभ्यश्च इति त्रिः पठेत् । दक्षिणपाणिना दीपं निर्व्वाप्याच्छिद्रावधारणं कुर्य्यात ॥ (परिसमाप्तिसूचकं वाक्य नास्ति) ।

विषयः । श्राद्धीयमन्त्राद्यनुष्ठानकथनं ।

---

## No. 627. सपिण्डनप्रयोगः ।

Substance, country yellow paper. Folia, 7. Lines, 5—6 on a page Extent, 160 s'lokas. Character, Bengali Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani. Appearance, rotten. Prose Incorrect

*Sapinda-prayoga* Directions for performing the first anniversary s'ráddha, according to the rules of Váchaspatí Mis'ra Anonymous.

Beginning. अथ वाचस्पतिमिश्रसम्मतः यजुषां सपिण्डनप्रयोगः । तदहं प्रविश्योपविश्याचम्य प्राङ्मुखः ॐसिद्धमिति पाचिकां स्पृष्ट्वा पुण्डरीकाक्षं यथोक्तलक्षणं कृत्वा कुशतय-तिलजलान्यादाय अद्यामुकगोत्रस्येति ।

End. ततो विष्णुं स्मरेत् ॥

Colophon. इति वाचस्पतिमिश्रसम्मतः यजुषां सपिण्डनश्राद्धप्रयोगः समाप्तः ॥

विषयः । सपिण्डनसम्बन्धानुष्ठानकथन ।

---

## No. 628. कुक्कुटीव्रतकथा ।

Substance, country yellow paper. Folia, 4. Lines, 4—6 on a page Extent, 64 s'lokas Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani. Appearance, new. Verse. Incorrect.

*Kukkuti-vrata-kathá.* A story in praise of a fast called *Kukkutivrata*, or fowl fast. Chandramukhí, wife of Nahusa, is said to have first originated this fast, and Krishna is described as having taken his birth in the womb of Devakí to reward her piety in having observed it. A modification of it under the name of Lalitásaptamí is now observed by Hindu women, on the 7th of the waxing moon in the month of Bhádra, the forbidden bird being omitted. Anonymous.

Beginning. अथ कुक्कुटीव्रतकथा । युधिष्ठिर उवाच । देवकीजठरे केन व्रतेन तपसाथवा ।
उत्पन्नः श्रीजगन्नाथस्तन्मे ब्रूहि जनार्दन ॥
श्रीकृष्ण उवाच । लोमशो नाम देवर्षिर्मथुरामागतः पुरा ।
मोऽर्चितो वसुदेवेन देवक्या च युधिष्ठिर ॥

End. या कुक्कुटीव्रतचर्यं * * * * * देवं चराचरगुरुं हृदये निधाय ।
भक्त्या करोति कलुषौघनिघातदक्षं सावाप्नुयात् सकलसन्ततिभोगवृद्धिं ॥

Colophon इति कुक्कुटीव्रतकथा समाप्ता ॥

विषय । श्रीकृष्णजन्मन पूर्व्वविवरण । वसुतस्तु चस्य व्रतस्य प्रसादेन देवकीगर्भे श्रीकृष्णो जात इति वर्ण्णते । नष्टपर्यपया चन्द्रमुख्या प्रकाशितमिद व्रत वरमिति ।

---

## No 629 ब्रह्मयज्ञ ।

Substance country yellow paper Folia 4 Lines, 5—6 on a page Extent, 78 s'lokas Character, Bengali Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S iromani Appearance, new Prose Generally correct

*Brahma yaj a* Directions for performing the ordinary daily worship of Brahma by Brahmanas Anonymous

Beginning स तु मध्याक्रसन्ध्यानन्तर सूर्य्योदित प्राक कार्य्यः । यथा, प्रागग्रकुशेषु प्राङमुख सापकुशपवदय गृहीत्वा ॐपवित्रेस्थो वैष्णव्यौ इत्यनेन प्रादेशप्रमाण छित्वा ॐ विष्णोर्मनसा पूते स्थ इत्यनेन चाभ्युक्ष्य इत्यादि ।

End कृष्णचतुर्द्दश्या नद्या यमुनायाच कायम । ततो धौते वाससी परिधाय सद्भिय कृत्य अङ्गे च प्रक्षाल्य यथावर्द्ध । इत खण्डितम ।

विषय । ब्राह्मणस्य नित्यमवश्यकर्त्तव्यकर्म्मविशेष ।

---

## No 630 वृषोत्सर्गप्रयोग ।

Substance country yellow paper Folia 15 Lines 6 on a page Extent 337 s'lokas Character Bengali Date ? Place of deposit Krishnanagar Pandit Nimachandra S iromani Appearance old Prose Incorrect

*Vrishotsarga prayoga* Directions for performing the ceremony called *Vrishotsarga*, or consecrating a bull and four young heifers and letting them loose The work follows the rules of Váchaspati Mis ra

Beginning अथ यजुर्वेदिना वृषोत्सर्गप्रयोग । तत्रादौ सङ्कल्प कुर्य्यात

End ततो रुद्राय बहुसर्पिष्क पायस ब्राह्मणान भोजयत् ।

Colophon इति वाचस्पतिमिश्रसम्मतवृषोत्सर्गप्रयोग ।

विषय । वृषोत्सर्गानुष्ठानविधानम ।

---

## No 631 यजुर्वेदिसांवत्सरिकैकोद्दिष्टश्राद्धप्रयोग. ।

Substance, country yellow paper Folia, 6 Lines, 3—5 on a page Extent, 83 s lokas Character, Bengali Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani Appearance, old Prose Incorrect

*Yajurvedi-saṁvatsarikaikoddishṭa s ráddha-prayoga* Directions for offering the funeral cake on the first anniversary, according to the or dinance of the Yajur Veda

Beginning अथ यजुषा सांवत्सरिकैकोद्दिष्टश्राद्धप्रयोग । ततः पाक कृत्वे गृहं प्रविश्य हस्तपादौ च प्रचाल्य द्विराचम्य दीप प्रज्वाल्य पूर्वाभिमुख भोज्यमुत्सृज्य दक्षिण दद्यात ।

End ततो हस्तपादौ प्रचाल्य गृहं प्रविशेत ।

Colophon. इति यजुर्व्विदां सांवत्सरिकैकोद्दिष्टश्राद्धपद्धतिः समाप्ता ।

विषय । सांवत्सरिकश्राद्धानुष्ठानमन्त्रादिकथनम ।

---

## No 632 प्रतिष्ठाप्रयोगः ।

Substance, country yellow paper Folia, 8 Lines, 3—7 on a page Extent, 130 s'lokas Character, Bengali Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani Appearance, decayed Prose Incorrect

*Pratishṭha-prayoga* General rules for entering into a vowed austerity according to the Yajur Veda

Beginning अथ यजुर्वेदिनां साधारणव्रतप्रतिष्ठाप्रयोग । तत्र कथन्त व्रत समाप्य तत्तद्देवताप्रीतिकामो यथाशक्ति दानादि कृत्वा पुण्याहं स्वस्ति ऋद्धिञ्च वाचयित्वा ओं स्वस्ति न इत्यादि ।

End तत एतत्कर्म्मणा भगवान विष्णुः प्रीयतामिति समर्पयेत ।

Colophon इति साधारणव्रतप्रतिष्ठा समाप्ता ॥

विषय । व्रतप्रतिष्ठानुष्ठानविधान ।

---

## No 633 द्विजनयनं ।

Substance, country yellow paper Folia, 98 Lines, 6 on a page Extent, 1692 s lokas Character, Bengali Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani Appearance, decayed Verse Incorrect

*Drija-nayana.* Astrological rules for determining the exact time of the passage of the sun from one sign of the zodiac to another, and the moment most appropriate for performing such ceremonies as are enjoined on such occasions. By Halâyudha. The MS. is incomplete.

Beginning. जयति श्रीधरस्तोत्रपारोऽसुरदारणः ।
सर्व्वगः सर्व्वभूतेशः सर्व्वात्मा सर्व्वभावनः ॥
सन्ध्यावरोधकमतुष्टविकारकारि निसारकं किमपि भूषितकर्णदेशं ।
एतद्विरोधिलसकारि हलायुधेन नेत्रद्वयं विसदृशं नयनं द्विजानां ॥
अथ सङ्क्रान्तिनिरूपणम् । अयने द्वे विषुवे द्वे चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च सङ्क्रान्त्यो द्वादश स्मृताः ॥
मृगकर्कटसङ्क्रान्तौ द्वे तूदग्दक्षिणायने ।
तुलामेषे विषुवती गोलमध्ये ततोऽपराः ॥

End. मया उपवासनिषेधे तु भव्यं किञ्चित् । (इतः खण्डितम् ।)

विषयः । सङ्क्रान्त्यादिव्यवस्थाकथनं ॥

---

## No. 634. अधिकरणकौमुदी ।

Substance, country yellow paper. Folia, 18. Lines, 6—7 on a page. Extent, 685 s'lokas. Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani. Appearance, decayed. Prose. Incorrect.

*Adhikaraṇa-kaumudi.* Various kinds of topics reduced to Mimáñsá syllogisms, each comprehending five members, or the subject, the doubt, the prima facie argument, the conclusion, and the application. By Rámakṛishna.

Beginning. नन्दसूनुं नमस्कृत्य सर्व्वलोकेश्वरेश्वरं ।
निरूप्यतेऽधिकरणं रामकृष्णेन विस्तृतम् ॥
अधिकृत्य क्रियतेऽर्थाद्विचारो यस्मिन्नदधिकरणं मीमांसासिद्धान्तः । यदाह भट्टः ।
विषयो विषयश्चैव पूर्व्वपक्षस्तथोत्तरं ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥

End. अथमर्द्धः, काले कुर्य्यात् राघिः कुर्य्याम् ।

Colophon. इति श्रुत्यर्थोपम...... । इतः खण्डितम् ।

विषय । १, परिषदधिकरणं । २, रात्रिसत्राधिकरणं । ३, विश्वजिदधिकरण । ४, सर्व्वस्वदक्षिणाधिकरणं । ५, दोलाकाधिकरणं । ६, सर्व्वपिण्डाधिकरणं । ७, हविरभयत्वाधिकरण । ८, षड्वैकत्वाधिकरण । ९, सदर्थशालाधिकरण । १०, निषत्स्थपत्यधिकरणं । ११, रथकाराधिकरण । १२, तन्त्रन्यायः । १३, प्रसङ्गन्यायः । १४, अङ्गस्य प्रधानवृत्ते प्रयोजकत्वन्यायः । १५, योगसिद्ध्यधिकरणं । १६, कर्म्मण्यारम्भाधिकरणं । १७, षष्ठाधिकरणं । १८, देवताधिकरणं । १९, कौण्डपायिनामयनाधिकरणं । २०, यागदानहोमाधिकरणं । २१, पदाहरणीयन्यायः । २२, पदिन्यायः । २३, आर्काग्निष्टोमाधिकरणं । २४, छागनन्यायः । २५, कपालाधिकरणं । २६, अर्थवादाधिकरण । २७, विरोधाधिकरण । २८, प्रतिनिध्यधिकरण । २९, फलभूमा । ३०, यथानुपङ्गाधिकरण । ३१, देवतामादित्याधिकरणं । ३२, विकल्पाः । ३३, यावज्जीवाधिकरण । ३४, काम्यस्य नित्यापेक्षया विलम्बित्वाधिकरणं । ३५, तदन्तापकर्षन्यायः । ३६, तदुत्कर्षन्यायः । ३७, सयोगपृथकत्वन्याय । ३८, वक्तिवचनीयन्यायः । ३९, पण्पुराणन्यायः । ४०, दण्डापूपन्याय इत्यादयो निरूपिता ॥

---

## No. 635. कर्म्मविपाकः ।

Substance, country yellow paper. Folia, 85. Lines, 5—6 on a page. Extent, 1657 s'lokas Character, Bengali. Date SK. 1687 ? Place of deposit, Krishnanagar, Rájá Satis'achandra Ráya. Appearance, old. Verse. Incorrect

*Karmavipáka.* Diseases and evils resulting in this life for sins committed in a former one, and the expiations meet for their removal The causes and cures of the following evils are especially mentioned, *viz.* .—Loss of sexual power ; giving birth to dead infants ; poverty ; separation from loved objects ; diseases of the eye ; hunch-backedness ; lameness ; slit in the nostrils ; amputation of hands and feet ; diseases of the eyes ; widowhood ; barrenness ; miscarriage ; widowerhood ; death of many children ; misfortune ; getting rival wives ; loss of caste ; dumbness ; boils ; diseases of the mouth ; diseases of the ears ; stench of the skin ; loss of wealth ; fears ; dispepsia ; indigestion ; diarrhœa, dysentry ; jaundice ; cough ; asthma ; pthisis ; hemorrhages ; biliousness ; spleen ; colic ; piles ; fistula in ano ; diabetes. This is an extract from the *Bhrigu Sanhitá* section of the *Vrihaddharma Purána.*

Beginning. अथ कर्म्मविपाक उच्यते । भरत उवाच ।
छलौषधेन यो व्याधिर्न यात्युपशमं मुने ।
तद्विशेषं विशेषज्ञ वक्तुं मान्यस्त्वया श्रुते ॥
भृगुरुवाच । वातपित्तादिभिर्दोषैर्यदुत्पन्नं प्रशाम्यति ।
अगदेन सुवैद्येन कर्म्मजं नोपशाम्यति ॥
तस्मात् कर्म्म परिज्ञाय प्रायश्चित्तं करोति यः ।
स तु दोषैर्विनिर्मुक्तो रोगी स कञ्चुकोज्झितः ॥

End. इति पतिव्रतामाहात्म्यं ।

Colophon. इति बृहद्विष्णुपुराणे शाकुन्तल-भरत-भृगुसंवादे भृगुसंहितायां कर्म्मविपाकः समाप्तः ।

विषयः । पण्डत्वोपशमनं, मृतप्रजत्वं, दारिद्र्योपशमनं, वियोगोपशमन, नेत्रपीडा, कुष्ठत्वं, खञ्जत्वं, छिन्नाधिकत्वं, हस्तपादच्छेदः, चक्षूरोगः, गण्डदानमाहात्म्यं, वैधव्यं, वैधव्यशमनं, उमामहेश्वरदान, बन्ध्यात्वं, गर्भस्रावः, सुवर्णयज्ञोपवीतदानं, मृतभार्य्यत्वं, अमृतसङ्गपुत्रत्वं, घृतधेनुदानमाहात्म्यं, दौर्भाग्योपशमनं, सापत्न्यशमन, आत्यन्तरोगशमनं, मूकत्व, गण्डदोषशमन, मुखरोगः, कर्णरोग, गात्रगन्धः, दारिद्र्यधनक्षय, माहेश्वरकवचं, ज्वरोपशमन, दाहज्वरविनाशाय सप्तर्षिदानं, अग्निमान्द्यं, अजीर्णं, अतीसारः, ग्रहणीरोगः, पाण्डुरोग कामलारोगः, कासरोगः, विपुलरत्नदानं, धान्यकूटदानं, श्वासकासः, यक्ष्मारोगः, रक्तपित्तं, शय्यादानं, गुल्मरोगः, गणाधिपदानमाहात्म्यं, शूलरोगः, परिणामशूलः, अर्शरोगः, भगन्दरः, मूत्राघात इत्यादयो निरूपिताः ॥

---

## No. 636. कुमारीपूजा ।

Substance, country yellow paper. Folia, 4. Lines, 5—7 on a page. Extent, 55 ślokas Character, Bengali. Date ? Place of deposit, Krishuanagar, Pandit Táráprasanna Bhattácharjyá. Appearance, old. Prose and verse. Incorrect.

*Kumárípújá.* A Tántric compilation, giving directions for worshipping virgins of various castes, ages and characteristics.

Beginning अथ कुमारीपूजा। एकवर्षा भवेत सन्ध्या द्विवर्षा च सरस्वती।
त्रिवर्षा च त्रिधामूर्त्ति चतुर्वर्षा च कालिका॥
शुभगा पञ्चवर्षा च षड्वर्षा च उमा भवेत।
सप्तभिर्मालिनी साचात अष्टवर्षा च कुब्जिका॥
नवभि कालसन्दर्भा दशभिश्चापराजिता।
त्रयोदशे महालक्ष्मीर्द्विसप्ता पीठनायिका॥
क्षेत्रज्ञा पञ्चदशभि षोडशे चाम्बिका भवेत्॥ अथ पूजाक्रम।

End हस्ते वलय धारयेत। परिसमाप्तिवाक्य नास्ति।

विषय। कुमार्य्या अवस्थाभेदेनाभिधानान्तरकथन, तदीयपूजानुष्ठानप्रतिपादनञ्च।

---

## No 637 दत्तकनिर्णयः।

Substance, country yellow paper Folia, 2 Lines, 3—5 on a page Extent, 40 slokas Character, Bengali Date ? Place of deposit, Krishnanagar, Pandit Nimachandra S'iromani Appearance, old Verse and prose Generally correct

*Dattaka nirnaya* An exposition of the law of adoption By S'ulapáni This work forms a part of the author's great digest of the Hindu Law, the *Smritiviveka* Nearly the whole of it has been printed in Professor Bharatachandra S'iromani's *Dattaka s'iromani*

Beginning अथ दत्तकविवेक। याज्ञवल्क्य।
ददात माता पिता वाय स्वपुत्रा दत्तको भवेत। इति।

End अथ देया तु कन्या स्यात्तद्वंशस्य युधिष्ठिर।

Colophon इति श्रीशूलपाणिमहामहोपाध्यायकृतदत्तकनिर्णय समाप्त॥

विषय। दत्तकपुत्रकरणविचार।

---

## No 638 चिकित्सासङ्ग्रहः।

Substance, country yellow paper Folia, 71 Lines, 6—7 on a page Extent, 1810 s'lokas Character, Bengali Date ? Place of deposit, Krishnanagar, Ramakrishna Majumdar Appearance, old Verse Incorrect

*Chikitsá-sañgraha* alias *Gúdhavákyabodhaka.* A treatise on Hindu medicine and therapeutics. By Chakrapáni Datta. The author, though modern, has considerable reputation and wrote several works on medicine. Vide ante p. 25.

Beginning. गुणत्रयविभेदेन मूर्त्तित्रयमुपेयुषे। त्रयीमय त्रिनेत्राय त्रिलोकीपतये नमः॥
नानायुर्वेदविख्यातसद्वैद्यचक्रपाणिना।
क्रियते सङ्ग्रहो गूढवाक्यबोधकराचरः॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषध।
ततः कर्म्म भिषक् पश्चात् ज्ञानपूर्व्वं समाचरेत्॥

End. चतु॰ स्वेदे * * भाषान। इतः खण्डितम्।

विषयः। षडङ्गपानीयं, सर्व्वज्वरः, पैत्तिकज्वरः, चातुर्थिकावलेहिका, नवाङ्गं, वातपित्ताधिकारप्रभृतयो निरूपिताः।

---

## No. 639. काव्यचन्द्रिका।

Substance, country yellow paper. Folia, 8. Lines, 4—5 on a page. Extent, 180 s'lokas. Character, Bengali. Date ? Place of deposit, Krishnanagar, Rájá Satis'achandra Ráya. Appearance, old. Verse. Correct.

*Kávya-chandriká* alias *Gunálañkára-dosha.* An elementary treatise on rhetoric, embracing a summary of the ornaments and defects, of literary compositions, as also a classification of poetical writings. By Nyáyavágís'a, son of Vidyánidhi.

Beginning. सगुणा सालङ्कारा रसभावा दोषपरीहारा।
जगदनुरञ्जनशीला कविकृतलीला सरस्वती जयति॥
विद्यानिधितनुजेन न्यायवागीशधीमता।
गुणालङ्कारदोषाख्या क्रियते काव्यचन्द्रिका॥

End. चालङ्कारमहाभासं समुद्रं रससागरं।
बालकस्य प्रबोधाय रचित कतिचित् पदैः॥ परिसमाप्तिसूचकं वाक्यं नास्ति।

विषयः। काव्यप्रभेदरसदोषगुणालङ्कारादिनिरूपणं।

---

## No. 640. तोषणी ।

Substance, country yellow paper Folia, 13. Lines, 5 on a page Extent, 186 s'lokas. Character, Bengali. Date ? Place of deposit, Krishnanagar, Rájá Satis achandra Ráya Appearance, old. Verse. In correct.

*Toshaní* A Tántric compilation, on mystical rites called *Kulluká-setu, Mahá-setu* and *Nirvána-setu.* Anonymous

Beginning अथातो मया कुल्लुकामेतुश्चैर्महामेतुनिर्व्वाणयुक्तः सुगुप्तः ।
अनेकेषु तन्त्रेषु मन्त्रप्रदीपे सतां तोषणी वक्ष्यते भुक्तिमुक्तौ (?) ॥
कुल्लुकां मूर्ध्नि सञ्जप्य हृदि सेतुं विचिन्तयेत् ।
महासेतु विशुद्धौ तु सहस्रारे समुद्धरेत् ॥

End. कण्ठे दीपशिखाकार यष्टां वैदूर्य्यसन्निभं ।
नैष्ठिके चन्द्रबिम्बाभ धमधो रत्नवद्दुचिः ॥ परिसमाप्तिसूचकं वाक्यं नास्ति ।

विषयः । कुल्लुका-सेतु-महासेतु-निर्व्वाणादिकथनं ।

---

## No. 641. अमरुशतकं ।

Substance, country yellow paper. Folia, 12. Lines, 2—6 on a page. Extent, 222 s lokas. Character, Bengali Date ? Place of deposit, Krishnanagar, Pandit Táráprasanná Bhaṭṭáchárjyá. Appearance, old. Verse. Incorrect.

*Amarus'ataka.* A collection of miscellaneous mostly amatory poetical pieces by Amaru. The author is held in high esteem as one of the greatest poets of mediæval times. A Bengali translation of this work has lately been published in Calcutta.

Beginning. ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठ-प्रेङ्खन्नखांशुचयसम्बलितोऽम्बिकायाः ।
त्वां पातु मञ्जरितपल्लवकर्णपूर-लोभभ्रमद्भ्रमरविभ्रमभृत् कटाक्षः ॥ १ ॥

End. शृङ्गारभारपरम रसद कवीनां काव्यं मनोजमनवद्यमिति प्रसादम् ।
चक्रेऽमरः कविगुरुः सुविचार्य्य सन्तः सन्तोषसन्ततिसुधाप्रकर पिबन्तु ॥ १०१ ॥
इत्यमरुशतकं समाप्तम् ॥

विषयः । रसभावादिप्रेमोद्बोधकाशेषरहस्यार्थप्रतिपादन ।

---

## No. 642. महातन्त्रराजः ।

Substance, country yellow papar. Folia, 9. Lines, 6 on a page. Extent, 243 s'lokas. Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Táráprasanna Bhattácharya. Appearance, old. Verse. Incorrect.

*Mahátantrarája.* The essence of the Vedánta doctrine of salvation discussed from a Tántric stand-point.

Beginning कैलासशिखरासीनं देवदेवं जगद्गुरु ।
इत्युक्त्यैवमुमा देवी ब्रह्मज्ञानं महेश्वरं ॥
कुत उत्पद्यते देव । कुतः सृष्टिर्विनश्यति ।
ब्रह्मज्ञान कथ देव सृष्टिसंहारवर्ज्जितं ॥

End पुण्याख्यानमिद देवि विचार्य्य ब्रह्मविद्भवेत् ।
निन्दया याति नरकं नाह चापि (?) महेश्वरि ॥

Colophon. इति पार्व्वतीशिवसंवादे ब्रह्मज्ञानमहातन्त्रराजे पञ्चम पटलः । समाप्तश्चाय ॥

विषयः । तान्त्रिकसम्मतब्रह्मविद्या ।

---

## No. 643. तन्त्रोक्तचिकित्सा ।

Substance, country yellow paper. Folia, 23. Lines, 6 on a page. Extent, 418 s'lokas Character, Bengali. Date ? Place of deposit, Krishnanagar, Pandit Taráprasanna Bhattácharya. Appearance, old. Verse. Incorrect

*Tantrokta-chikitsá.* A Tántric compilation on medicine, charms, &c. Contents: medicinal herbs; treatment of fevers; do. of diabetes; do of pthisis; do. of dysentery; do of diseases of the mouth; do of diseases of the nostrils; do. of dryness of the mouth; do of diseases of the teeth; do of colic; do of boils; sleep; generative organs; conception, and diseases incident to that condition; conjugal love; sweetness of breath; charms for subjugating mankind; aphrodisiacs; means for promoting corpulency; antidotes to snake poison; cure for barrenness, &c.

Beginning. देव्युवाच । श्रुतं भवत्प्रसादेन यथा कालस्य दर्शनं ।
मन्त्रस्य सारसम्भूतमिदानीमौषधं वद ॥
येन सिद्ध्यन्ति देहानि सर्व्वकामप्रदानि च ।
जरारोगहरं कल्प तद्वद त्रिपुरात्मक ॥

## No. 908. दैवतकाण्ड: ।

Substance, country paper, 10½ × 4½ inches. Folia, 92 Lines, 8—9 on a page. Extent, 1400 s'lokas. Character, Nágara. Date, Sm 1664. Place of deposit, Calcutta, Government of India Appearance, old Prose. Correct.

*Daivata Kánda.* The second part of Yáskás Nirukta, containing Chapters VII to XIII.

Beginning. अथातो दैवत तद्यानि नामानि प्राधान्यस्तुतीनां तद्देवमित्याचचते ।

End. मचते भूताय नमो यास्काय ब्रह्मशुक्लमषीय ब्रह्मशुक्लमषीय ॥ ० ॥

Colophon. पञ्चमः पादः ।

विषयः । ऋग्देवमन्त्रभेदनिर्णयः । (सप्तमाध्यायावध्यस्य प्रारम्भः अतः प्रारम्भखण्डितमिद ।)

---

## No. 909. सौभाग्यतन्त्रं ।

Substance, country paper, 9½ × 4 inches. Folia, 10. Lines, 10 on a page. Extent, 300 s'lokas. Character, Nagara, Date, Sm 1850. Place of deposit, Varáhanagara, 24-Parganas, Bábu S'ambhuchandra Mukhopádhyáya. Appearance, old; the leaves are worm-eaten Verse. Incorrect.

*Saubhágya Tantra.* A Tántric compilation, containing directions for formal recitation (*Páráyana*) of certain *víja mantras* under specified conditions. The word *páráyana* is employed to indicate all formal readings, whether of víja mantras or of particular works, within stated times, or under specified restrictions. The practice is said to have originated since the time of Parikshit, the grandson of Arjuna, who heard the Mahábhárata recited in course of seven days. He was cursed by a Bráhman to be bitten by a serpent in seven days, and, knowing the curse to be infallible, he devoted those days to hearing the mighty deeds of his ancestors as described in the great epic. Portions of the Vedas, the Puranas, and the Rámáyana, are now frequently made the subject of páráyana. The time extends from three days to three months. The other conditions are fasting and abstinence of various kinds. In the case of víja mantras the number of times they are to be

repeated within a given time, and in particular postures are the principal conditions Contents: 1, Time meet for repeating vija mantras. 2, General conditions for repeating mantras. 3, Sixteen primary conditions. 4, Different kinds of Paráyana 5, Paráyana of the mantras sacred to the Vidyás (forms of Durgá) 6, Paráyana of the name of a god or goddess 7, A form of Paráyana called *Tattva*, 8, Ditto called *Haṅsa*. 9, Ditto called *chakra*. 10, Ditto called *Ramá*. 11, Ditto called *Ámnáya*.

Beginning. अथ + कटमानन्दनिष्यन्दामृतविग्रहा ।
चिन्मात्ररूपिणी विद्या वन्दे स्वानन्दसुन्दरी ॥
अथ वक्ष्ये विस्तरेण पारायणविधिं परं ।
यस्य विज्ञानमात्रेण साक्षात्परशिवो भवेत् ॥

End. एवं यः कुरुते भक्त्या पारायणक्रमाज्जपं ।
मानुषे वर्त्तमानोपि साक्षात्परशिव परः ॥

Colophon. इति श्रीमत्सौभाग्यतन्त्रे पारायणविधौ आम्नायपारायणनिरूपणं नामैकादशः पटलः ।

विषयः । १ पटले, जपकालः । २, मन्त्रपारायणलक्षण । ३, षोड्शाङ्गविधानोक्त-वीजतत्त्वकथनादि । ४, पारायणभेदाः । ५, विद्यामन्त्रपारायणकथनादि । ६, नामपारायणकथन । ७, तत्त्वपारायणकथनादि । ८, हंसपारायणलक्षण-कथनादि । ९, चक्रपारायणलक्षणकथनादि । १०, रमापारायणलक्षणकथनादि । ११, आम्नायपारायणलक्षणकथनादि ।

---

## No 910. रससङ्केतकलिका ।

*Substance, country paper, 12¾ × 6½ inches. Folia, 14 Lines, 11 on a page. Extent, 357 slokas Character, Nagara. Date. ? Place of deposit, Varáhanagara, 24-Parganas, Babu Sambhuchandra Mukhopádhyaya. Appearance, old. Verse Generally correct.*

*Rasasaṅketa-kaliká.* A treatise on the preparation of metallic medicines By Chámunda, a Káyastha of the Naigeya clan The MS is incomplete, some unknown portion of the end being wanting. Contents 1, Mercury, its purification and oxidation; tests of perfect oxidation, virtues of its various oxides. 2 Oxidation of iron, gold, copper, &c. 3. Medicinal preparations with poisons. 4 Medicinal preparations with mercury.

Beginning. शिवं नत्वा रसाधीश चण्डः कायस्थकुलभूः ।
करोति रससङ्केतकलिकाभीष्टसिद्धिदाम् ॥ अथ पारदोत्पत्तिः ।

End. (खण्डितत्वात्परिसमाप्तिवाक्यादिकं नास्ति । ग्रन्थकर्तुर्नामद्वयं प्रारम्भवाक्योक्त, चण्ड इति, "इति नैगमकायस्थचामुण्डकृतायां रससङ्केतकलिकायां प्रथमोल्लासः, एतद्वाक्योक्त" चामुण्ड इति । कुत्रचित् नैगमेतिविशेषणं न दृश्यते) ।

विषयः । १, उल्लासे, पारदशोधनभस्मीकरणप्रकारः । पारदभस्मपरीक्षा । पारदभस्मगुणकीर्त्तनादि । २, लौहस्वर्णरौप्यताम्रादिधातुभस्मीकरणादिकथन । ३, विषोपधकरणप्रकारादि । ४, रसौषधकरणप्रकारादि ।

---

## No. 911. मन्त्रचन्द्रिका ।

Substance, country paper, 10¾ × 4 inches. Folia, 36. Lines, 11 on a page. Extent, 1100 s'lokas. Character, Nágara. Date, Sá 1855. Place of deposit, Varáhanagara, 24-Parganás, Bábu S'ambhuchandra Mukhopádhyáya. Appearance, decayed. Prose. Generally correct

*Mantra-chandriká.* Vija-mantras of various gods and goddesses and the ritual appropriate for worshipping them. The work is divided into nine chapters (*prákas'as*), and embraces the names, besides those of the leading gods and goddesses, of the planets, and the demoniac attendants of Siva and Durgá.

Beginning. आरक्ताभ त्रिनेत्र पृथुजठरमरं वेदहस्तान्दधान
विधाय मौलिदेशे हिमकरशकलं दानधाराक्तकुम्भ ।
नागेन्द्राद्यैः समस्तैरमरपरिवृतैः सेवित शुभदक्षं
भोगीन्द्राधं प्रसन्न सकलशुभकर न भजेहं गजास्यं ॥ १ ॥
आदौ गणपतेर्मन्त्राः शिवायास्तदनन्तरम् ।
ततः कृष्णस्य सूर्यस्य सम्भोयोक्ता यथाक्रमम् ॥ २ ॥
अथ क्रमेण गणेशादीन् स्मृत्वा तेषां मन्त्रा मन्त्रभेदाय लिख्यन्ते ।

End. इति विन्यस्य । ओं अग्रये हृत् । अम्बकाय शिरः । ओं विनेत्राय शिखा॰ । ओं वह्निहाय कवच॰ । ओं अग्निवीर्याय नेत्र॰ । ओं सर्वदेवतात्मकाय फट् । इति मन्त्रैः षडङ्गं विधाय ।

Colophon. इति मन्त्रचन्द्रिकायां नवमः प्रकाशः । इति शिवप्रकरणं समाप्तम् ।

विषयः । १ प्रकाशे, गणेश—वक्रतुण्ड—वीरगणेश—लक्ष्मीगणेश—शक्तिगणेश—हरिद्रागणेश-मन्त्रादिकथन । २, वाग्वादिनी—हसवागीश्वरी—बाला—भैरवी—कामेश्वरी—राजमातङ्गी—मन्त्रादिकथन । ३, भुवनेश्वरी—दुर्गा—जयदुर्गा—लक्ष्मी—अन्नपूर्णा मन्त्रादिकथन । ४, अश्वारूढा—गौरी—ज्येष्ठलक्ष्मी—वह्निवासिनी—शिवदूती—त्रिकण्टकी—बगलामुखी—मन्त्रादिकथन । ५,उग्रतारा—दक्षिणकालिका—धूमावती—भद्रकाली—महाकाली—उच्छिष्टचाण्डालिनी—धनदयक्षिणी—मन्त्रादिकथन । ६ वासुदेव—लक्ष्मीवासुदेव—हरिहर—वामन—हयग्रीव—वराह—सुदर्शन—पुरुषोत्तम—मन्त्रादिकथनं । ७, हृषीकेश—श्रीधर—नरसिंह—राम—सीता—लक्ष्मण—हनुमन—मन्त्रादिकथन । ८ गोपाल—कामदेव—कार्त्तवीर्यार्जुन—सूर्य-चन्द्र—भौम—बुध—बृहस्पति—शुक्र—शनैश्चर—राहु—केतु—वह्नि—मन्त्रादिकथन । ९,शिव—दक्षिणामूर्त्ति—मृत्युञ्जय—अघोर—नीलकण्ठ—चेत्रपाल—वटुक—त्र्यम्बक—मन्त्रादिकथन ।

---

## No 912 मयशिल्प वा प्रतिष्ठातन्त्र ।

Substance, English paper, 8 × 6 inches Folia, 98 Lines, 19—20 on a page Extent, 1900 s'lokas Character Nagara. Date, ? Place of deposit Calcutta Babu Rajendralala Mitra Appearance, new Verse Incorrect and corrupt

*Maya Mata*, alias *Maya Silpa*, alias *Pratishṭha Tantra* A treatise on architecture founded on the canons of Maya, a Dánava, who is reputed to have built a palace for Yudhishṭhira. The work is written in the Tántric style in anushṭup verses, but it is so full of lacunæ, and obscure terms and phrases that it is in many places unintelligible The author's name is not given, and the last line and the colophon suggest the idea of the work being incomplete But such as it is it is the most complete treatise on architecture that has yet come to hand, and I feel grateful to Mr A. C Burnell for having procured it for me from the Library of the Rájá of Tanjore It is remarkable in being less devoted to religious ceremonies and astrological disquisitions than the Mána śra Contents, 1, Architecture defined 2—3, Examination and purification of the ground intended to be built upon 4, Measurement of land 5, Ascertainment of the points of the compass. 6, Fixing of pegs to demarcate the spots for building 7, Offerings to gods 8, Measure of villages and the rules for

laying them out 9, Ditto of towns. 10, Directions for laying out squares, octagons, &c. 11, Laying the foundation and the ceremonies to be observed on the occasion. 12, Plinth 13, Base 14, Pillars. 15, Stone-work. 16, Joining or cementation. 17, Spires or tops of houses 18, One-storied houses. 19—20, Two-storied houses. 21, Three, four, &c,-storied houses. 22, Gopuras or gates. 23, Mandapas. 24, Out-offices, barns, treasuries, &c. 25, *Mandapa sabhás*, or open courts. 26, Linear Measure—of finger-breadths, &c.

Beginning प्रणम्य शिरसा देवं सर्वज्ञं जगदीश्वरं ।
त दृष्ट्वा चातलं श्रुत्वा शास्ति शास्त्र यथाक्रमं ॥
नैतलाना मनुष्याणा वसादीना सुखोदयम् ।
प्राज्ञो मुनिर्मयः कर्ता सर्वेषां वस्तुकर्मणा ॥
आदौ वास्तुप्रकारन्तु भूपरीक्षापरिग्रहम ।
मानोपकरणं चैव शङ्कुस्थापनमार्गक ॥
सुपदं सूत्रविन्यास बलिकर्मविधिं तथा ।
प्रासादीनाञ्च विन्यास लक्षण नगरादिषु ॥
भूलम्भस्य विधान च गर्भविन्याससलक्षणं ।
उपपीठविधानं चाधिष्ठानाना च लक्षण ॥
स्तम्भानां लक्षण चैव प्रस्तरस्य च लक्षण ।
सन्धिकर्मविधान च शिखराणा तु लक्षण ॥
एकभूमिविधान च द्वितलस्य तु लक्षण ।
त्रितलस्य विधानं च चतुर्भूम्यादिलक्षण ॥
सशालपरिवाराणा गोपुराणां तु लक्षण ।
मण्डपादिविधिं चैव शालाना चैव लक्षण ॥
ग्रहविन्याससमार्गं च ग्रहवेशनमेव च ।
राजवेश्मविधान च द्वारविन्यासलक्षण ॥
यानानां शयनानां च लक्षण लिङ्गलक्षण ।
पीठस्य लक्षण सम्यगनुकर्मविधिं तथा ॥
प्रतिमालक्षण देवदेवीना मानलक्षणं ।
चक्षुरुन्मीलनं चैव सच्छिष्याश्च यथाक्रमं ॥
अमर्त्याश्चैव मर्त्याश्च यत्र यत्र वसन्ति हि ।
तद्भनस्थिमतन्त्रे(?)सद्भेदं च वदाम्यहं ॥

भूमिप्रासादशास्त्र च शयनं च चतुर्विधं ।
भूरेव मुख्यवस्तु स्यात्तत्र जातानि यानि हि ॥
प्रासादादीनि वस्तूनि वस्तुत्वादनुवस्तुयात ।
वस्तून्येव हि तान्येव प्रोक्तान्यस्मिन पुरातनैः ॥
वर्णमध्यप्राकारा दिक्स्पन्दस्य यतैरपि ।
परोक्षेव यथायोग्यं स्वीतावधिनिर्दिता ॥
या सा भूमिरिति ख्याता वर्णानां च विशयत ।
द्विविधं तत्समुद्दिष्टं गौणमङ्गीत्यनुक्रमात् ॥
ग्रामादिन्येव गौणादि अवलङ्गी मतो मता ।
सभाशालाप्रपारङ्गमण्डप मन्दिर तथा ॥
• प्रासाद इति विख्यात + शिविका + कादय ।
स्पन्दन चैवमानीक यानमित्युच्यते बुधै ॥
पञ्चम चण्डिकाकालपञ्जर फलकासन ।
पर्यङ्क बालपर्यङ्क शयन चैवमादिक ॥
चतुर्णामधिकाराणां भूरेवादौ प्रचक्ष्यते ।

End जितालि किन्नराणा तु मत्स्याना तु दिताल्लक ॥
अष्टजात तथैक स्यात् पिशाचानां तु विंशति ।
अङ्गुल्य सम्यगाख्याताः प्रासादलक्षण शृणु ॥
इति सुप्रभेदे प्रतिष्ठातन्त्रे क्रियापादङ्गुलिविधानपटल एकोनविंश । •

विषय । १ अध्याये, वास्तुलक्षण। २, ३, भूपरीक्षाभूमिशोधनादि । ४, भूमानप्रकार' । ५, दिक्साधनादि । ६ शङ्कुद्वारा पीठादिस्थाननिर्देश ७, देवताबलि । ८, ग्राममानतत्स्थापनप्रकार । ९, नगरमानतत्स्थापनप्रकार' । १०, चतुरस्र-चतुरस्रत्तभूमिकरणप्रकारादि । ११, भूमिमध्यस्थल चतुरस्रगर्तखननजलपूरणादिस्वरूपगर्भन्यासविधकथन । १२, उपपीठविधान । १३, अधिष्ठानविधान । १४, स्तम्भपरिमाण, तन्निर्माणद्रव्यकथन । १५, प्रस्तरकर्मकथन । १६, सन्धिकर्मकथन । १७, शिखरकरणादि । १८, एकभूमिस्थविधान । १९, २०, द्वितलस्थविधान । २१, त्रितलचतुस्तलादिविधान । २२, गोपुरविधान । २३, मण्डपविधानोपदेश । २४, प्रासादशालादिविधानापदेश । धनधान्यागारादीना स्थानदिङ्निर्णयपरिमाणचणादि च । २५, मण्डपसभाविधानादि । २६, अङ्गुलिमानादिप्रकार' । (अङ्गुल्य सम्यगाख्याता प्रासादन्तलक्षण शृणु, इत्युक्तत्वादसम्पूर्णमिदमित्यनुमीयते ।)

## No. 913. सभातरङ्गसारः ।

Substance, English paper, 11 × 5¼ inches. Folia, 37. Lines, 10—11 on a page. Extent, 310 s'lokas. Character, Nágara. Date, Sm. 1926. Sk, 1791. Place of deposit, Varáhanagara, 24-Parganás, Bábu Sambhuchandra Mukhopádhyáya. Appearance, new. Verse. Generally correct.

*Sabhá-tarangasára.* A poetical miscellany. By Jagannátha Mis'ra. Contents: 55 S'lokas in praise of greatness. 3 S. Do. grave men. 48 S. Condemnation of wicked men. 8 S. Praise of merit. 12 S. Do. liberal-mindedness. 22 S. The song of the chátaka. 11 S. The song of the Bhramora (large blackbee). 1 S. Do. silk-cotton-tree 4 S. Do. of the Parrot. 2, Do. the good tree. 8 S. Do. of the Kokila. 5 S. Do. of the crane. 5 S. Do. of the goose. 4 S. Do. of the crow. 9 S. Do. of the elephant. 8 S. Do. of the lion. 5 S. Do. of the deer. 5 S. Do. of the sandal tree. 2 S. Do. of musk. 1 S. Do. gum tree. , 8 S. On trees. 7 S. Places unfit for habitation. 8 S. Song of the firefly. 9 S. Song of the moon. 1 S. Song of water. 7 S. Song of the clouds. 4 S. Do. of the lotus. 2 S. Do. of the mountain. 2 'S. Disruption of friendship. 3 S. Condemnation of bad poets. 2 S. Do of flatterers. 8 S. Desire. 2 S. Absence of pride. 2 S. Advantage of one's own place. 3 S. The kind of wife to be divorced. 2 S. Characteristics of a good woman. 4 S. Song of the River. 2 S. Pride condemned. 8 S. Praise of valorous men. 21 S. Advantage of wealth. 22 S. Miserliness condemned. 21 S. Evils of poverty. 6 S. Evils of begging.

Beginning. नत्वा शिवं प्रथमतः प्रणिपत्य षष्ठीं वाग्देवतां तदनु तातपद गुरुच ।
यद्गृह्यते किमपि यत् सुजनास्तदत्र चेतो विधातु मुदिताः कृपया मयि स्युः ॥ १॥
जगन्नाथेन मिश्रेण तेनैव क्रियतेधुना ।
नाम्ना सभातरङ्गोय सद्ग्रन्थः सत्सुखावहः ॥ २ ॥

End. श्वाघ्रात परिम्लानमुपनखरैः चुष चय चर्वितं,
क्षिप्त यद्दत नीरसत्वकुपितेनेति व्यर्थां मालयाः ।
हे माणिक्य तवैतदेव कुशल यद्वानरेणाप्रदा-
दन्त.सत्वनिरूपणाय सहसा चूर्णीकृतो नाश्मना ॥ ९ ॥

Colophon. इति श्रीसभातरङ्गसारः ।

१ २ ८ १
वीरविक्रमप्रकस्य वत्सरैः सम्मितैरसद्विनन्दकेवलैः । (१९२१)
१ ८ ० १
शालिवाहनस्य तथैव धीमत शकनन्दगिरिकेवलैर्युते ॥ (१०८१)
वृषराशिरविगे सितपक्षे सर्पस्वामिनि तिथौ रविवारे ।
ख्यातकाम्रिपुरे सुरमणीये लेखितं शुभपुस्तकमेतत् ॥

विषय । ५५ पद्यैर्महद्व्यक्तिविशेषाणां प्रशंसा । त्रिभिः पद्यैर्दोर्ज्जनप्रशंसा । ४८ पद्यैर्दुर्जननिन्दा । ८ पद्यैर्गुणप्रशंसा । १२ पद्यैरुदारव्यक्तिप्रशंसा । २२ चातकान्योक्तिः ११ पद्यैर्भ्रमरान्योक्तिः । १ पद्येन मालत्यन्योक्तिः । ४ पद्यैः शुकान्योक्तिः । २ पद्याभ्यां सद्वृक्षान्योक्तिः । ८ पद्यैः कोकिलान्योक्तिः । ५ पद्यैर्बकान्योक्तिः । ५ पद्यैर्हंसान्योक्तिः । ४ पद्यैः काकान्योक्तिः । ९ पद्यैर्गजान्योक्तिः । ८ पद्यैः सिंहान्योक्तिः । ५ पद्यैर्मृगान्योक्तिः । ५ पद्यैश्चन्दनान्योक्तिः । २ पद्याभ्यां कस्तूर्युक्तिः । १ पद्येन बाबुलान्योक्तिः । ८ पद्यैः सामान्यवृक्षान्योक्तिः । ७ पद्यैः परित्याज्यदेशाद्युक्तिः । ८ पद्यैः खद्योतान्योक्तिः । ९ पद्यैश्चन्द्रान्योक्तिः । १ पद्येन जलान्योक्तिः । ७ पद्यैर्मेघान्योक्तिः । ४ पद्यैः कमलान्योक्तिः । २ पद्याभ्यां पर्वतान्योक्तिः । २ पद्याभ्यां मैत्रीभङ्गहेतुकथन । २ पद्यैः कुकविनिन्दा । २ पद्याभ्यां सवकनिन्दा । ८ पद्यैस्तृष्णावर्णन । २ पद्याभ्यां निरहङ्कारितावर्णनं । २ पद्याभ्यां स्थानप्रधानाधिकतावर्णन । ३ पद्यैः परित्याज्यस्त्रीलक्षणनिरूपण । १ पद्याभ्याम् उत्तमस्त्रीलक्षणोक्तिः । ४ पद्यैर्नश्वरोक्तिः । २ पद्याभ्यां गर्वपरिहारः । ८ पद्यैस्तेजस्विनां प्रतापवर्णन । २१ पद्यैर्धनप्रशंसा । २२ पद्यैर्धनसञ्चयादिनिषेधः । २१ पद्यैर्दारिद्र्यनिन्दा । ६ पद्यैर्याचकनिन्दा ।

---

## No. 914. षोड़शपिण्डदानप्रयोगः ।

Substance, country paper, 12½ × 3 inches. Folia, 4. Lines, 6 on a page. Extent, 45 s'lokas. Character, Bengali, Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Incorrect.

*Shoḍas'apiṇḍa-dána-prayoga.* A treatise on the offering of sixteen funeral cakes to the manes at certain times. Anonymous.

Beginning. अथ षोड़शपिण्डदानप्रयोगः । तत्र मन्वन्तरप्रदीपे । अमावास्यान्तु(?)कन्यार्के तीर्थप्राप्तौ तथा स्वपः । श्राद्धं कृत्वा विधानेन दद्यात् षोड़शपिण्डकमिति ।

End. मित्राणि सख्यः पशवश्च वृक्षा दृष्टा ह्यदृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये ममसङ्गताश्च तेभ्यः स्वधापिण्डमहं ददामि ॥
अचोनविंशतिपिण्डे षोड़शपिण्डक पारिभाषिक पद्यामवत् ।

Colophon. इति षोड़शपिण्डदान ।

विषयः । अमावास्यायां कन्यार्के तीर्थे च कर्त्तव्यस्य षोड़शपिण्डदानस्य विधिः।

---

## No. 915. जकारभेदः ।

Substance, country yellow paper, 15 × 3½ inches. Folia, 5. Lines, 6 on a page. Extent, 93 s'lokas. Character, Bengali Date, Sk 1661. Place of deposit, Calcutta, Government of India. Appearance, old. Prose Generally correct.

*Jakárabheda.* A vocabulary of words containing the letter ज, designed to point out what words have the letter ज and what the letter य having the sound of ज. By Purushottama.

Beginning. (प्रथमपत्राभावात् प्रारम्भवाक्यादिकं नास्ति ।)

End. जयन्ती जानकी जय्या जिज्ञासा जनकी विजः ।
गुजटीगुज+चैव तर्जन्यपि च वर्गजः ॥

Colophon. इति पुरुषोत्तमकृते जकारभेदः समाप्तः ।

विषयः । तालव्यमूर्द्धन्यदन्त्यसकारवता मूर्द्धन्यणकारवता वर्गीयजकारवतां च कतिपय-शब्दानामत्र संग्रहः।

---

## No. 916. पार्थिवलिङ्गपूजनविधिः ।

Substance, country yellow paper, 11⅔ × 4½ inches Folia, 3. Lines, 8 on a page. Extent, 61 s'lokas. Character, Nágara. Date, ? Place of deposit, Calcutta, Government of India. Appearance, old. Verse. Generally correct.

*Párthivalingapujanavidhi.* An extract from one of the Tantras, containing directions for worshipping S'iva in the form of a Lingam made of earth. Anonymous.

Beginning. कथयस्व महाबाहो लोकानां प्रीतिवर्द्धिकाम् ।
इदानीं मित्रसाधो ! कथिता न प्रकाशिता ।

कथयत्वाधुना देव यदि स्नेहोऽस्ति मा प्रति।

End. सद्दवपूजनाद्देवि लभते वाञ्छित फलम्।

लचस्य पूजनाद्देवि शिवत्व प्राप्नुयाद्ध्रुवं॥ समाप्तश्चेदम्।

विषयः। मृण्मयपार्थिवलिङ्गपूजनविधिकथन।

---

## No. 917. दुर्गोत्सवविवेकः।

Substance, country yellow paper, 15½ × 3 inches Folia, 15. Lines, 6—7 on a page Extent, 340 s'lokas. Character, Bengali. Date, Sk. 1766. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Generally correct.

*Durgotsava-viveka.* A treatise on the propriety of worshipping Durgá, in spring and autumn, or the great national rite of the Durga-pujá. By Súlapáṇi Bhaṭṭácharya. The work forms a part of the author's great compendium of modern Hinduism, called the *Viveka.*

Beginning. नत्वेशानीपदाम्भोज समुद्भूतरमोदमित।

दुर्गोत्सवविवेकस्तु क्रियते शूलपाणिना॥

End. विशेषतस्त्वच बोधनप्रक्रिया नास्ति।

बोधितायाः बोधनाभावादिति प्राग् विवृतम्।

होमादिकन्तु पूर्ववज्ज्ञेयमिति दिक्।

Colophon. इति महामहोपाध्यायश्रीशूलपाणिभट्टाचार्यविरचितो दुर्गोत्सवविवेकः समाप्तः।

विषयः। शरदि वसन्ते च देवीपूजा कथ कर्तव्येत्यादेर्विचारः।

---

## No. 918 व्रतकालविवेकः।

Substance, country yellow paper, 15½ × 3 inches. Folia, 14. Lines, 6 on a page. Extent, 260 s'lokas. Character, Bengali. Date, Sk. 1766. Place of deposit, Calcutta, Government of India. Appearance, fresh. Prose. Generally correct.

*Vratakála-viveka.* Times meet for performing vratas or optional fasts. By Súlapáni Bhaṭṭácharya.

Beginning. नानामुनिमतद्वैधजातसंशयसम्भवा।

व्रतकालविवेकोऽयं क्रियते शूलपाणिना॥

End कालविप्रयानिषन्तिमित्येतदसम्भवाच ।
प्रतिष्ठाविधानञ्च प्रतिष्ठाविवेकोऽनुसन्धेयम ।

Colophon इति . साङ्गडियानमहामहोपाध्यायश्रीशूलपाणिविरचित व्रतकालविवक समाप्त ।

विषय । व्रतलक्षणकथनादि । व्रतानुष्ठानादिकथन । व्रतानुष्ठाने विहितकाल । जन्माष्टमीव्रतनिर्णय । श्रीरामनवमीव्रतनिर्णय । एकादशीव्रतनिर्णय । सावित्रीचतुर्दशीव्रतनिर्णय । शिवरात्रिव्रतनिर्णय । सङ्क्रान्तव्रतनिर्णय । व्रतप्रतिष्ठाकालनिर्णयश्च ।

---

## No. 919 सङ्क्रान्तिनिर्णयः ।

Substance, country yellow paper, 15½ × 3 inches Folia, 9 Lines, 6 on a page Extent, 170 slokas Character, Bengali Date, Sk. 1766 Place of deposit, Calcutta, Government of India Appearance, new, but soiled Prose Generally correct

*Sankranti-nirnaya* Rules for ascertaining the conjunctions of months, or the time when the sun passes from one sign of the zodiac to another, the characters of those conjunctions, what should be done at such times, and what avoided Anonymous

Beginning अथ सङ्क्रान्तिव्यवस्थानिर्णय । आदौ सङ्क्रा विनिर्णीय ततो राशिस्थनिर्णयम ।
व्यवस्थानिर्णय पश्चात् करिष्यामि न संशय ॥

End सङ्क्रान्त्या पक्षयोरन्ते द्वादश्यां निशि सन्ध्ययो ।
तुलसी ये विचिन्वन्ति ते छिन्दन्ति हरे शिर ॥

Colophon इति सङ्क्रान्तिनिर्णय समाप्त ।

विषय । नन्दादिसप्तसङ्क्रान्तिनामकथनादि । मेषादिराशिस्थद्वादशसङ्क्रान्तिनिर्णय । सङ्क्रान्तौ निषिद्धानिषिद्धकर्मकथनादि च ।

---

## No 920 शुद्धितत्त्वकारिका ।

Substance, country yellow paper, 15¾ × 3 inches Folia, 19 Lines, 6 on a page Extent, 300 slokas Character, Bengali Date, Sk. 1767 Place of deposit, Calcutta, Government of India Appearance, fresh Verse Generally correct

*S'uddhitattiakarika* Memorial verses embodying the canons of Raghunandana's S uddhitattva, or rules for the observance of mourning, and on personal impurities , By Harinarayana S arma

Beginning सर्वस्वरूप श्रीराम प्रणम्य भक्तवत्सल ।
कारिका शुद्धितत्त्वस्य वितनोति यथामति ॥
End किन्तु एकादशाहे चेत श्राद्ध क्रियते तदा प्रेतपदोल्लेखेन ।
Colophon इति श्रीहरिनारायणशर्मकृता शुद्धिकारिका समाप्ता ।
विषय । जननमरणाशौचनिर्णय ।

---



## No 921 अशौचमञ्जरी ।

Substance, country yellow paper, 12½ × 3¾ inches Folia, 6 Lines, 5—6 on a page Extent, 60 s lokas Character, Bengali Date, Sk 1770 Place of deposit, Calcutta, Government of India Appearance, fresh Verse Incorrect

*As auchamanjari* Rules regarding mourning and the duties to be attended to during the first ten days after the death of a parent, kinsman, or other person for whom mourning has to be observed Anonymous

Beginning प्रणम्य परमात्मान नत्वा शम्भु त्रिलोचन ।
अशौचनिर्णयं वक्ष्ये प्रेतकर्म दशाह्निक ॥
End नैत्रोषधजि(न)चैव पक्वापक्वसयघ्न ।
पण्येषु चैव सर्वेषु नाशौच सूतकं ॥
Colophon इत्यशौचमञ्जरी समाप्ता ।
विषय । मरणाशौचनिर्णय ।

---

## No 922 पदार्थकौमुदी ।

Substance, country yellow paper, 17 × 3¼ inches Folia, 199 Lines, 8 on a page Extent, 7920 s lokas Character, Bengali Date, Sk 1627 Place of deposit, Calcutta, Government of India Appearance, old Prose Generally correct

*Padarthakaumudi* A commentary on the Nama-linganus asana of Amara Sinha By Narayana Chakravarti

Beginning. हृदि स्वमपि दूरस्थं सर्वमाहत्य तिष्ठति ।
यन्नद्दः परमं बीजं तदानन्दपदं नुमः ॥
रद्दः प्रमिष्टता समं विविधकेलिमातन्वती
मुडः स्मरमहोत्सवे प्रिद्रमुखाजचुम्बार्थिनी ।
दिगम्बरहृताम्बरा + + + + + मौलेस्थित
ह्रिया नतमुखी सदा चितिधरेन्द्रकन्यावतु ॥
मङ्गलानन्दवीजानि भक्तानामतिसन्ततम् ।
गुरूणां चरणाज्ञानि पुनः पुनरुपास्महे ॥
ज्ञात्वा शास्त्रमशेषमादिविदुषामालोक्य नानामतं
देरम्बादिमिश(राज) युग्ममनलं नत्वातिभक्त्या सुधीः ।
श्रीनारायणपादपद्ममधुलिन्नारायणः श्रीनिधि-
र्यत्नेनामरपञ्जिकां वितनुते षड्वेपतः सत्कविः ॥

End. इद ग्रन्थविस्तरभयान्नोक्तं तत् सिद्धानां पूर्वाचार्याणां च प्रयोगाज्ज्ञेयम् । यथा, स्त्रीपुंसयोः । विप्रचतुष्टयो, विप्रचतुष्टयः । गोधनानि पुंस्यपि नपुंसकेपि । पोटा स्त्रीत्याद्युदाहार्यमूह्यम् ।

Colophon. इति पदार्थकौमुद्याममरकोषटीकायां लिङ्गादिसङ्ग्रहवर्गार्थप्रकाशः । समाप्तोयं ग्रन्थः ।

विषयः । अमरकोषकाण्डत्रयार्थविवरणं ।

---

## No. 923. वस्तुतत्त्वं ।

Substance, country paper, 11¾ × 6½ inches. Folia, 38. Lines, 14—15 on a page. Extent, 1090 s'lokas. Character, Bengali. Date, Sk. 1747. Place of deposit, Calcutta, Government of India. Appearance, old. Prose. Generally Correct.

*Vastutattva.* On the philosophy of the Vaishṇava faith, so treated as to establish the divinity of Krishṇa. By Rámasundara Vidyávágís'a. The work was composed in the S'aka year 1727, and originally comprised seven sections, of which the MS. under notice comprehends the last five. Contents: 3. Máyá, Mahattva and other categories described. 4. The great soul defined. 5. Vásudeva defined and described. 6. Brahma without attributes described. 7. Bhagaván described.

Beginning नन्दात्मजस्य कृष्णस्य साक्षाद्भगवतो मुदा ।
पदचिन्मकरन्दाय नमः सद्गतिशान्तये ॥
अथ तत्त्वसारनिरूपणं

End किञ्च प्रमाणवादीनां मन्त्राणामपि तत्परत्वमिति श्रीसनत्कुमारतन्त्रे यत्र, त्रैलो-
क्यमङ्गलकवचः इति ।

Colophon इति वस्तुतत्त्वे भगवत्तत्त्वं नाम सप्तमः परिच्छेदः ॥
ब्रह्मन्नीश हिरण्यगर्भ परमात्मन् वासुदेवाद्वय
ज्ञानश्रीलहरे स्मरेति नियतं निर्भेदतो मे नमः ।
संसारार्णवतारणैकधमनिं साक्षात् परं कारणं
तस्मात्त्वं प्रति पण्डित प्रतिदिनं कुर्वीत यत्नं महत् ॥
कृतानि सप्ततत्त्वानि श्रीराधाकान्तशर्मणा ।
कदाचिद्यदि वर्त्तन्ते पण्डितानां समीपतः ॥
तदा निवेदनं वक्तुं शृणुध्वं सद्विवेकिनः ।
पूर्वापरार्थदृष्ट्यैव यदि दोषोऽत्र वर्त्तते ॥
शोधितव्यं कृपावद्भिः क्षमध्वं वा दयारताः ।
लिखितं पञ्चतत्त्वं वै रामसुन्दरशर्मणा ॥
विद्यावागीशवर्य्येण श्रीमता पुण्यशालिना ।
शाके सप्तयुगाद्रिचन्द्रगणिते मासे सधौ वासरे
सूर्य्यस्येह महत्यदिव्यनगरे कृष्ण दशाम्या तिथौ ।
ग्रन्थाद्य शुभदः शुभो बहुमतं प्रातः समाप्तिं गतः
श्रीरामेश दयानिधान परमानन्दप्रभो पाहि तम् ॥
श्रीकृष्णप्रीतिमुद्दिश्य रचितो ऽयत्नतः ।
अतोऽत्र शब्ददोषोऽपि नैव दोषाय कल्पते ॥

• विषय । (अत्र सप्त परिच्छेदाः । तत्र प्रथमद्वितीयपरिच्छेदौ न स्तः, अतः खण्डितमिदम्।)
३, परिच्छेदे मायासत्त्वादिपदार्थनिरूपणपूर्वकं सारतत्त्वनिरूपणं । ४, पर-
मात्मतत्त्वनिरूपणं । ५, वासुदेवतत्त्वनिरूपणं । ६ निर्गुणब्रह्मतत्त्वनिरूपणं ।
७, भगवत्तत्त्वनिरूपणं ।

## No. 924. तान्त्रिकपूजापद्धतिः ।

Substance, country paper, 11½ × 5¼ inches Folia, 10. Lines, 12 on a page Extent, 250 s'lokas. Character, Bengali Date, ? Place of deposit, Calcutta, Government of India Appearance, old. Prose. Generally correct.

*Tántrikapújá-paddhati.* Guide to daily rituals according to the Tantras. Contents: Rules for the threefold Sandhyá worship, washing of the face on such occasions for Vaishnavas; offering of Argha; certain manipulations called *nyása*, intellectually placing certain letters of the alphabet on fourteen different lotus-like organs of the body; *nyása* in connexion with different members of the body; intellectually placing certain deities on six different parts of the body; placing of those divinities on the organic and sensuous functions of the body; Pránáyáma; placing of divinities in their proper places and on their respective seats; intellectual worship; arrangement of the instruments of worship; the worship of the seats of the gods; worship of the gods.

Beginning. अथ तान्त्रिकसन्ध्याप्रयोगः । आचम्य जले गङ्गे चेत्यादिना स्वर्णमण्डलात्तीर्थमावाह्य मूलेन कुम्भेन भूमौ त्रिवार जलं क्षिपेत् ।

End. सद्वारमुद्रया कृत्वा(?) तत्तेज पुष्पेः सार्द्धं सहृदयमानयेत् । तत ऐशान्यां चतुष्कोणमण्डलं कृत्वा तत्र निर्माल्यमेयं ॐ विष्वक्सेनाय नम इति दद्यात् ।

Colophon. इति पूजापद्धतिः समाप्ता ।

विषयः । तान्त्रिकसन्ध्याविधिः । वैष्णवाचमनविधिः । सामान्यार्घस्थापनादिविधि । कराङ्गुलीषु हृदयादिषड़ङ्गेषु च मातृकान्यास । शरीरान्तस्थचतुर्दलपद्मे वमपसादिचतुर्वर्णन्यासः । सर्वाङ्गप्रत्यङ्गादिषु मातृकावर्णन्यासः । षड़ङ्गेषु केशवादिकीर्त्यादिदेवताद्वन्द्वन्यासः । पुनस्तत्र प्राणादि-मत्यादितत्त्वन्यास । प्राणायमः । देवतापीठन्यासः । मानसपूजा । शङ्खस्थापनादिप्रकारः । पीठपूजा । देवतापूजा ।

---

## No. 925. प्राणतोषिणी ।

Substance, country paper, 18½ × 6½ inches Folia, 304. Lines, 13 on a page. Extent, 19,513 s'lokas Character, Bengali. Date of printing Sk. 1743. Place of deposit, Calcutta, Government of India. Appearance, decayed. Prose and Verse. Correct.

*Pránatoshaní* A summary of the Tantric cult The work was compiled by Ramatoshana S armá, under the patronage of Pránakrishna Vis vása, a zemindar of Khadadaha in the neighbourhood of Calcutta, and printed for private circulation in the S aka year 1743 The name of the work is made up of the second word of the author's name, and the first of that of the patron It comprises large extracts from the authentic Tantras

Beginning जडे काव्य दावी हुतमुदकविन्दो जलधितां
पयोधौ पायोघलमपि न तु सर्वकवशागा ।
गिरां धूलीलग्नमचलवरत्व रजसि वा
विधिनेच्छाखैर जयति जयतारेत +++ ॥ इत्यादि ।
(खण्डितत्वात्समाप्तिवाक्यादिक नास्ति ।)

विषय । (विषयस्तस्य सूचीपत्र द्रष्टव्य ।)

---

## No 926 लिङ्गादिसङ्ग्रहटीका ।

Substance, country yellow paper, 12½ × 3 inches Folia, 17 Lines, 7—11 on a page Extent, 330 slokas Character Bengali Date, SK 1759 Place of deposit, Calcutta, Government of India Appearance, decayed Prose Generally correct

*Lingadisangraha-tíka* A commentary on the Lingádisangraha,—a treatise on grammar By Bharata Mallika

Beginning सलिङ्ग इत्यादि । सलिङ्गमास्ते पाणिनिवररुचिचन्द्रादिप्रणीतवक्ष्यमाणलिङ्ग-लक्षणसूत्रसहितै । इत्यादि ॥

End इति प्रयागाच ज्ञ्यापर्यायत्वेन क्लोवे प्राप्ते पुस्त्व । एवमन्यत्रापि ज्ञेयम । समाप्ता लिङ्गसङ्ग्रहादिटीका ।

Colophon इति श्रीभरतमल्लिककृता टीका ।

विषय । क्लृप्तिनाम्नादिमन्दाना लिङ्गनिर्द्धारणपरस्य लिङ्गादिसङ्ग्रहस्य वाक्यार्थविवरण ।

---

## No 927. शब्दार्थसारमञ्जरी ।

Substance, country yellow paper, 12½ × 3 inches Folia, 30 Lines, 6 on a page Extent, 525 s'lokas Character, Bengali Date, SK 1761 Place of deposit, Calcutta, Government of India Appearance, decayed Prose Generally correct

*S'abdárthasára-manjarí.* A treatise on the syntax of the Sanskrit language. By Jayakrishṇa S'armá.

Beginning. हेरम्बचरणद्वन्द्वं विघ्ननाशकरं परं ।
प्रणम्य जयकृष्णेन क्रियते सारमञ्जरी ॥ १ ॥
तत्र प्रथमतः कालनिरूपणम् ।

End. आलोच्य विविधग्रन्थान् विचार्य च पुनः पुनः ।
कृतेयं जयकृष्णेन शब्दार्थसारमञ्जरी ।

Colophon. इति जयकृष्णशर्मविरचितशब्दार्थसारमञ्जरी समाप्ता ।

विषयः । आख्यातार्थनिरूपणं । शाब्दबोधप्रकारः । कारकविचारः । समासवादः । स्वशब्दविचारादि । सर्वनामपदशक्तिविचारः । एवशब्दविचारः । उपसर्गविचारः । कृत्प्रत्ययविचारः । नञर्थकथनं । वैधहिंसाविचारः । पदशक्तिनिरूपणं । शक्तिग्राहकपदार्थनिरूपणं । शब्दविचारः । वाचकलस्य लक्षण । वीप्साविचारः । शाब्दबोधप्रकारान्तर । एकादिपरार्द्धपर्यन्तसङ्ख्याशब्दविचारः ।

---

## No. 928. गीतगोविन्दटीका ।

Substance, country yellow paper, 12½ × 3 inches Folia, 34 Lines, 8—11 on a page Extent, 134 s'lokas Character, Bengali Date, ? Place of deposit, Calcutta, Government of India Appearance, old. Prose Generally correct.

*Gítagovinda Tíká.* A commentary on the Gítagovínda of Jayadeva. Anonymous.

Beginning. टीका । राधामाधवयो रहःकेलयो जयन्ति । निश्चलक्रीडा जययुक्ता भवन्तु इत्यर्थः । कुत्र यमुनाकूले । किम्भूतयोः । इत्य अनेन प्रकारेण पश्चाद्यैत्यितयोः(?) । नन्दनिदेशमाह । हे राधे तत् तस्मात् त्वमेव इम श्रीकृष्णं गृहं प्रापय आनय इत्यर्थः ।

End. किम्भूत । विरहानलदग्धपुरुष यो मृतस्य वपुर्देहोऽग्निना दह्यते दग्धय मृतस्य विनाशस्य पुण्ये भवति इति विनाशः ॥ ६ ॥ (ख०)

विषय. । जयदेवकविविरचितगीतगोविन्दमहाकाव्यस्य व्याख्यानं ।

---

No 929 बालबोधिनीनाम्नी गीतगोविन्दटीका, मूलसहिता ।

Substance, country paper $10\frac{1}{2} \times 5\frac{3}{4}$ inches Folia, 42 Lines 14—17 on a page Extent 2250 s'lokas Character, Bengali Date, ? Place of deposit, Calcutta, Government of India Appearance old Prose Generally correct

*Balabodhini* A commentary on the Gitagovinda of Jayadeva Anonymous Jayadeva is said in this MS to have been the son of Vamadeva and grandson of Bhojadeva

Beginning टीकाप्रा० । श्रीचैतन्यकृपालेशकणामात्रेण केनचित् ।
टीका सङ्कल्प्यते गीतगोविन्दस्य समासतः ॥
स्वयं वोद्धुमभिप्राय जयदेवमहात्मने
क्रमेणोपक्रमादेषा प्रयत्ते बालबोधिनी ।

मूलप्रा० । मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै
र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहः केलयः ॥

End टीकास० । अत्र सगीय सम्यग्विमदाख्यसम्भोगरसानन्दित पीताम्बर प्रियाधीनत्वेन तद्वर्णवर्णनप्रिय श्रीकृष्णो यत्र स इति ।
इति स्वपितृमातृकथनपूर्वकपराशरादिसतत्त्वा एवास्याधिकारिण इति तान् प्रत्याशिषयति भोजेति । भोजदेवनामास्य पिता वामदेवीनाम्नी जननी पराशरा ये प्रिया तन्मतज्ञास्तेष्वपि ये बन्धवस्तन्मतसारश्रीराधामाधवरहः कलिध्यानेन वस्तुत प्राप्तास्तेषामेव कण्ठे भूषणवत् सदा गीतगोविन्दाख्य कवित्वमस्तु ।

मूलस० । यच्छान्त यावद्भाव शृङ्गाररसास्वतमिह जयदेवस्य विश्वगवचांसि ।
इति श्रीजयदेवकृतौ गीतगोविन्द महाकाव्ये स्वाधीनभर्तृकावर्णने सुप्रीतपीताम्बरो नाम द्वादशः सर्गः ।
श्रीभोजदेवप्रभवस्य वामदेवीसुतश्रीजयदेवकस्य । पराशरादिप्रियबन्धुकण्ठे श्रीगीतगोविन्दकवित्वमस्तु ॥

विषय । जयदेवकविविरचितगीतगोविन्दाख्यमहाकाव्यस्य व्याख्यान ।

## No. 930. पुराणदानमाहात्म्यं ।

Substance, country paper, 10½ × 4¾ inches Folia, 6 Lines, 10—11 on a page Extent, 62 slokas Character, Bengali Date, ? Place of deposit, Calcutta, Government of India Appearance, new Verse. Generally correct.

*Purána-dána-máhátmya.* Nature, character, and extent, of the Puránas, and the religious merit of presenting them in MS. to Bráhmanas Anonymous. The style of the work is Puránic, and, I suspect, it is an extract from the Matsya Purána. It is narrated by Brahmá in reply to the question of a sage named Matsya.

Beginning. मत्स्य उवाच । पुराणं धर्मशास्त्राणां प्रथमं ब्रह्मणा स्मृत ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
पुराणमेकमेवासीत्तदा कल्पान्तरेनघ ।
त्रिवर्गसाधन पुण्य शतकोटिप्रविस्तर ॥
निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया ।
अङ्गानि चतुरो वेदा पुराणन्यायविस्तरः ॥
मीमांसा धर्मशास्त्रं च परिगृह्यात्मघातकृतं ।
मत्स्यरूपेण (हि) पुनः कल्पादावुदकार्णवे ॥
अशेषमेतत्कथितमुदकान्तर्गतेन च ।
श्रुत्वा जगाद स मुनीन् प्रतिवेदं चतुर्मुखः ॥
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ।
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप ॥
व्यासरूपमहं कृत्वा संहरामि युगे युगे ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥
तदाष्टशतधा कृत्वा भूर्लोकेस्मिन् विभाव्यते ।

End. तद् ब्रह्माण्डपुराणन्तु ब्रह्मणा समुदाहृत ।
योदद्यात्तु व्यतीपाते+ + + + +संयुत ।
राजसूयसहस्रस्य फलमाप्नोति मानवः ॥ १८ ॥
चतुर्लक्षमिति प्रोक्त व्यासेनाद्भुतकर्मणा ।
मत्पितुर्मम पित्रा च मया तुभ्य निवेदितम् ॥

Colophon इति पुराणदानमाहात्म्यम् ।

विषय । पुराणश्लोकसङ्ख्या, पुराणनामव्युत्पत्ति , पुराणदानविधिश्च ।

---

## No 931 काव्यकलापः ।

Substance, white and yellow country paper, 17 × 3 inches Folia, 7 Lines, 7 on a page Extent 214 s'lokas Character, Bengali Date, ? Place of deposit, Navadvipa Pandit Purushottama Tarkalankara Appearance, fresh Prose and verse Incorrect

*Katya-Kalapa* A romance in prose and verse By Mahananda Dhua . The MS is a mere fragment and very corrupt

Beginning नत्वा श्रीदेवदेवी त्रिभुवनजननी श्यामरूपा वरेण्यां
यस्या क्रोडे निवसति सदा दिव्यरूप सुरेशम ।
व्याद मेघाघनबविरतर पीतवास तडित् त (?)
वच्य काव्य कलाप क लतप्र+भव नीलकण्ठस्य वक्त्रात् ॥

End सा इति वाक्य कथयित्वा राजपुत्रो नयचरा लतवती ।
ततः श्रीकाव्यकलापो महानन्दधीरेण कथितुमारब्ध ॥

विषय । (अत्र परमस्वराचरत्वाद्दुर्वाच्यम् । तत्वाटेऽयमस्मानिति लक्ष्यत ।
चम्पूकाव्यमेतत् । अथमपूर्णत्व दस्य पुस्तकस्य प्रकरणच्छेदाऽज्ञेय ।)

---

## No 932 क्रमसङ्ग्रहः ।

Substance, white and yellow country paper, 19½ × 3½ inches Folia 23 Lines, 6 on a page Extent, 638 s lokas Character, Bengali Date, ? Place of deposit, Navadvipa, Pandita Purushottama Tarkalankara Appearance, old Prose and verse Correct

*Kramasangraha.* The law of succession according to the Bengal school By S'rikrishna Tarkalankara Bhattácharya

Beginning जगदस्वापदद्वन्द्वमापदा चयसाधनम् ।
विश्वकोटिविनिर्माणस्थितिसंहारकारणम् ॥
निधाय हृदये दायाधिकारक्रमसङ्ग्रह ।

क्रियत पण्डितामोदी श्रीमच्छ्रीकृष्णशर्मणा ॥
अथ दायाधिकारक्रम —

End स्वयमूढायान्तु दास्या तथाविधापत्यस्य विभाज्यत्वमेवेति । आर्त्तमप्रतमप्यत-दिति ॥

Colophon इति श्रीश्रीकृष्णतर्कालङ्कारभट्टाचार्यविरचितो दायाधिकारक्रमसङ्ग्रहः समाप्त ॥

विषय। अत्र दायाधिकारक्रमादिर्वर्णित ।

---

## No 933 उत्तरगीता ।

Substance, yellow country paper, 14 × 3½ inches Folia, 13 Lines, 6 on a page Extent, 204 slokas Character, Bengali Date, ? Place of deposit, Navadvipa, Purushottama Tarkalankara Appearance, old Verse Generally correct

*Uttara Gitá* A sequel to the Bhagavat Gita, treating of theocratic Vedánta philosophy

Beginning. अर्जुन उवाच । यदेकं निष्कलं ब्रह्म व्योमातीतं निरञ्जनं ।
अप्रतर्क्यमविज्ञेयं विनाशोत्पत्तिवर्जितम् ॥ १ ॥
कैवल्यं केवलं शान्तं शुद्धमत्यन्तनिर्मलम् ।
कारणं योगनिर्मुक्तं हेतुसाधनवर्जितम् ॥ २ ॥
हृदयाम्बुजमध्यस्थज्ञानं ज्ञेयस्वरूपकम् ।
तत्क्षणादेव मुच्यत यज्ज्ञानाद् ब्रूहि केशव ॥ ३ ॥
श्रीभगवानुवाच । साधु पृष्ट महावाहो बुद्धिमानसि पाण्डव ।
यन्मा पृच्छसि तत्त्वार्थमशेषं तद् वदाम्यहम् ॥ ४ ॥

End भूतशून्यमशाचिन्ते पुनर्जन्म न विद्यते ।

Colophon. इति श्रीमदुत्तरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे वैराग्योदयो नाम तृतीयोऽध्यायः समाप्त ।

विषय। श्रीकृष्णार्जुनयोः कथोपकथनव्याजेन ज्ञानोपदेशाध्यायत्रयात्मक । तत्र १ अध्याये ब्रह्मनिरूपणम् । २ आत्मानुभव । ३, वैराग्योदय । (कर्म्यान्तिमपथ इत्यमन्त्र, तत्साधनप्रणाम्यादिश्च विद्यते ।)

---

## No 934 श्यामामन्त्राः ।

Substance country paper, 18 × 3½ inches Folia 13 Lines, 9 on a page Extent 432 s'lokas Character old Bengali Date, ? Place of deposit, Navadvípa, Pandita Vrajanatha Vidyaratna Appearance, very old, with annotations on the margin Prose and verse Correct

*S yamamantrah* A collection of *Vijamantras* of the ten great Vidyás, or manifestations of the Goddess Durgá Anonymous

Beginning अथ श्यामामन्त्रा । तत्र काले तन्त्रे कामत्रय वह्निमस्थ रतिविन्दुसमन्वित ।
कूर्चयुग्म तथा लज्जायुगल तदनन्तरम ॥
दक्षिणे कालिके चेति पूर्वबीजानि चोच्चरेत् ।,
अन्ते वह्निवधून्द्याद् विद्या राज्ञी प्रकीर्त्तिता ॥
अस्या पूजाप्रयोग । प्रातःकृत्यादिक कृत्वा स्नात्वा मन्त्राचमन कुर्याद् ।
तद्यथा ।

End इति छिन्नमस्ताप्रकरणम् । भैरवतन्त्रे ।
अथ वक्ष्ये महाविद्या कालिकाद्या सुदुर्लभा ।
यासा विज्ञानमात्रेण जीवन्मुक्तो भवेन्नर ॥
नात्र चित्ताविशुद्धि स्यात न वा मित्रादिदूषणम् ।
न वा प्रयासबाहुल्यं समयासमयादिक ॥
न वित्तव्ययबाहुल्य कायक्लेशकर न च ।
य एना चिन्तयन्मन्त्री सर्वकामसमृद्धिदाम ॥
तस्य हस्ते सदैवास्ति सर्वासिद्धिर्नसशय ।
गद्यपद्यमयी वाणी सभाया तस्य जायते ॥
तस्य दर्शनमात्रेण वादिनो निष्प्रभा गता ।
राजानोऽपि च दासत्व भजन्ते किं पर जनाः ॥
वक्ष्ये गैत्य जन्तुस्तम्भ गतिस्तम्भ विवस्वत ।
दिवारात्रिव्यत्ययश्च वशीकर्मंचमा भवत ॥
अन्न च लभते दृष्ट्वा गणत्व दुर्लभ नर ।

Colophon (समाप्तिसूचक वाक्य न विद्यते । पर शेषपत्रस्थलिखनप्रकारदर्शनात् षाड्गतन्त्र महाविद्याया छिन्नमस्तकाया प्रकरणसमाप्तिपूर्वकफलश्रुतिकथनादनन्तर अपर कथ्यस्यापरस्याभावाच्च समाप्तमेवेति गम्यते ।)

विषयः। कालीताराप्रभृतीनां षोड़शानां महाविद्यानां मन्त्राः, सप्रमाणं पूजापद्धत्यादिश्च। (परिच्छेदग्रन्थम्।)

---

## No. 935. पितृपद्धतिः।

Substance, yellow country paper, 18 × 3 inches Folia, 2. Lines, 8 on a page. Extent, 87 s'lokas. Character, Bengali Date, ? Place of deposit, Navadvípa, Pandita Vrajanátha Vidyáratna. Appearance, old. Prose and verse. Generally correct.

*Pitṛipaddhati.* An elementary treatise on S'ráddhas, or rites meet for the dead. By Gopála Áchárya.

Beginning. अखिलनिगमद्वद्भिर्व्यवीर्णा वहन्ती
स्मितविकसितवक्त्रा ज्ञानदीपप्रयत्ना।
अनुकूलफलयुक्ता माखिनी सेवकानां
हृदि लसतु सदा मे भारती सर्वयुक्ता॥
ध्यात्वा नन्दीश्वरं देवं नत्वा पितृपदद्वयम्।
गोपालो बालतोषाय विलिखेत पितृपद्धतीः॥
सांवत्सरिकं श्राद्ध मेरेणैव कर्त्तव्यमिति दक्षसम्मतम्।

End. पतो गोत्रसगोत्रयोर्विकल्प इति शूलपाणिः॥ ०॥

Colophon. इति गोपालाचार्यविरचितपितृपद्धतौ प्रमाणखण्डो नाम प्रथमपरिच्छेदः॥
पन्थोऽयं लिखितो यत्नात् हरिनारायणशर्मणा॥
ॐ गङ्गा॥ (अथ समाप्तिवाक्ये प्रथममितिपदयुतेरसमाप्तमिदमित्यनुमीयते)।

विषय। श्राद्धविषयकप्रमाणादिः।

---

## No. 936. तन्त्रसारः।

Substance, red and yellow country paper, 18 × $4\frac{1}{2}$ inches Folia, 297. Lines, 8—9 on a page. Extent, 13,815 s lokas Character, Bengali. Date, Sk. 1773. Place of deposit, Navadvípa, Pandit Vrajanátha Vidyáratna. Appearance, soiled. Prose and verse. Correct. Copies have also been found at Navadvípa in the possession of Yadavachandra Bhaṭṭacháryá and Yadunátha Sárvabhauma Naiyáyika. Several copies are also available in Calcutta.

*Tantrasára.* A summary of the Tántric cult, comprising mantras, diagrams and rituals for the adoration of the different Hindu divinities, both Sákta and Vaishnava. By Krishnánanda Bhattácharya. The work is held in high estimation, and has been very extensively quoted as a standard authority.

Beginning. नत्वा कृष्णपदद्वन्द्वं ब्रह्मादिसुरवन्दितम् ।
गुरुञ्च ज्ञानदातारं कृष्णानन्देन धीमता ॥
तत्तद्ग्रन्थगताद् वाक्याज्ज्ञानार्थं प्रतिपद्य च ।
सौकर्यार्थंकृत सङ्क्षेपात् तन्त्रसारः प्रतन्यते ॥

End. गमनागमने जाड्यकी सा तनुयायी फलानि कुण्डली ।
उद्दिता कुलकामधेनुरेषा भजतां काङ्क्षितकल्पवल्लरीम् ॥
वेदार्थशास्त्रविपरीतविलोकनेन प्रायाभवद्यजनलोपमवद्य मातः ।
तद्दूरकूटविशदीकरणेषु जातान् मातः क्षमस्व तव पादयुगेषु याचे ॥
यद् यन्मया नाथ विमूढबुद्ध्या स्पष्टीकृतं गुह्यतमन्तु तन्त्रे ।
क्षन्तव्यमेतत् करुणानिधान क्रोधो न चार्हः खलु पामरेषु ॥

Colophon. इति श्रीमहामहोपाध्यायश्रीकृष्णानन्दभट्टाचार्यविरचिते तन्त्रसारे तृतीयपरिच्छेदः ॥ समाप्तोऽयं तन्त्रसारः ॥

विषयः। बहुतरतन्त्रादिभ्यः तान्त्रिकदीक्षादिविषयकप्रमाणान्युद्धृत्य यथाक्रमेणेह सङ्गृहीतः। अत्र त्रयः परिच्छेदाः सन्ति। तत्र प्रथमे, प्रथमं लक्षणचक्रादि, ततो व्यवस्था। तद् यथा—गुरुलक्षणम्, शिष्यलक्षणम्, कुलाकुलचक्रम्, राशिचक्रम्, नक्षत्रचक्रम्, अकथहचक्रम्, ऋणिधनिचक्रम्, अकडमचक्रम्, दीक्षाकाल, वारनियम, तिथिनियम, नक्षत्रनियम, योगनिर्णय, करणनिर्णय, लग्ननिर्णय, निषिद्धमासतिथिनियम, मालानिर्णय, मालार्थं मणिनियम, आसनभद्रा, मालासंस्कार, पुरश्चरणम्, भक्ष्यादिनियम, वर्ज्यद्रव्याणि, भूतलिपि, स्त्रीणां होमाधिकार, अन्यप्रकारपुरश्चरणं, पुरश्चरणप्रयोग, कूर्मचक्रम्, मन्त्राणां दशसंस्काराः, मातृकाध्यानम्, वर्णपुरश्चरणमहत्त्व, कलावतीदीक्षाप्रयोग, चन्द्रसूर्याग्नीनां कलानां नाम, षोडशाङ्गादिधूप, पञ्चायतनी दीक्षा, सङ्क्षेपदीक्षा, सर्वतोभद्रमण्डलम्, नवनाभमण्डलम्, त्रिशोकी मुद्रा चेति।

द्वितीये प्रथमं सामान्यपूजादि ततो मन्त्राः। तद् यथा—सामान्यपूजा, सन्ध्याप्रयोग, स्नानविधि, गायत्री, गायत्रीध्यानम्, पूजाप्रयोग, भुवनेश्वरी-

मन्त्राः, अन्नपूर्णा०, त्रिपुरा०, दुरिता०, वज्रप्रस्तारिणी०, दुर्गा०, महिषमर्दिनी०, जयदुर्गा०, शूलिनी०, वागीश्वरी०, पारिजातसरस्वती०, गणेश०, हेरम्ब०, हरिद्रागणेश०, लक्ष्मी०, महालक्ष्मी०, सूर्य०, अजपा०, विष्णु०, श्रीराम०, श्रीकृष्ण०, बालगोपाल०, वासुदेव०, हयग्रीव०, नृसिंह० हरिहर०, वराह०, शिव०, मृत्युञ्जय०, चिन्तामणि०, नीलकण्ठ० चण्ड०, क्षेत्रपाल०, वटुक०, त्रिपुरभैरवी०, सम्पत्प्रदाभैरवी०, कौलेशीभैरवी०, सकलसिद्धिदाभैरवी०, चैतन्यभैरवी० भयविध्वंसिनीभैरवी०, कामेश्वरीभैरवी०, षट्कूटाभैरवी०, नित्याभैरवी०, रुद्रभैरवी०, भुवनेश्वरीभैरवी०, अन्नपूर्णेश्वरीभैरवी०, त्रिपुरबाला०, नवकूटबाला०, अन्नपूर्णेश्वरीभैरवी०, श्रीविद्या०, कामराज०, लोपामुद्रा०, मनूपासिता०, कुबेरोपासिता०, चन्द्रोपासिता०, द्वितीयलोपामुद्रा०, वैष्णवीषट्कूटा०, नन्दिपूजिता०, सूर्योपासिता०, इन्द्रोपासिता०, शङ्करोपासिता०, दुर्वासउपासिता०, पञ्चमीविद्या०, पारिभाषिकषोडशी०, महाषोडशी०, बीजावलिषोडशी०, कमलासुन्दरी०, भुवनसुन्दरी०, वाक्सुन्दरी०, शक्तिसुन्दरी०, श्री०, प्रचण्डचण्डिका०, श्यामा०, गुह्यकाली०, भद्रकाली०, श्मशानकाली०, महाकाली०, तारिणी०, एकजटा०, नीलसरस्वती०, कुल्लुका०, उग्रतारा०, महानीलसरस्वती०, तारापीठा०, अष्टतारिणी० मन्त्राः, रहस्यपुरश्चरणम्, वीरसाधनम्, अधिकारिलक्षणम्, चितालक्षणम्, शवसाधनम्, विद्याभेदकथनम्, चण्डोग्रशूलपाणिमन्त्राः, मातङ्गी०, उच्छिष्टचाण्डालिनी०, धूमावती०, भद्रकाली०, धनदा०, श्मशानकाली०, बगलामुखी०, कर्णपिशाचीमन्त्राः, सिद्धिलक्षणम्, मञ्जुघोष, तारिणीकल्पः, सारस्वतकल्पः, कात्यायनीकल्पः, दुर्गामन्त्राः, गौरी०, विशालाक्षी०, राजमुखी०, इन्द्र०, गरुड०, माला०, विषहराग्नि०, हनुमत्कल्पः, हनुमद्वीरसाधनम्, आर्द्रपटी, श्मशानभैरवीमन्त्रः, ज्वालामालिनी०, महाकाली०, तत्प्रयोगः, ज्वालामालिनीप्रयोगः, निगडमोचनम्, चिटिमन्त्रः, त्र्यम्बक०, मृतसञ्जीवनी०, आकर्षणम्, विद्वेषणम्, उच्चाटनम्, सुखप्रसवमन्त्रः, अदर्शनम्, योगिनीसाधनम्, योगिनीसाधनकालः, तत्राधिकारिनिर्णयः, पूजाधारः, यन्त्रसंस्कारः, चक्रप्रतिष्ठाप्रयोगश्चेति।

तृतीये जपहोमप्रकाराद्युपदेशो यन्त्रादिलिखनप्रकारादयश्च। तद्यथा—प्रकीर्णकम्, पूजायां विहितनिषिद्धम्, पञ्चशुद्धि, मन्त्रसिद्धेरुपायः, मन्त्रसिद्धिलक्षणम्, मन्त्रदोषाः, मन्त्रदोषशान्तिः, होमार्थं कुण्डनिर्णयः, नवकुण्डानि, कुण्डानां विशेषफलम्, काम्यहोमार्थं कुण्डनिर्णयः, नागशिरआदिनिर्णयः, नवकुण्डयोनिनियमः, नमोऽन्ते नमोदयादित्यादिविचारः, नित्यहोम, सङ्क्षेप-

होम, इत्यद्धोम होमद्रव्यप्रमाणम, षट्कर्मलक्षणम, आसनम, प्रथन-विदर्भ सम्पुट ग्राथन-योग पल्लवनिर्णय, षट्कर्ममन्त्रलिखने द्रव्यम्, शान्ति कादौ पात्रनियम, भूतानां मण्डलानि, भुवनेश्वर्याः स्तवकवचानि, अन्नपूर्णाया °, त्रिपुटायाः°, दुर्गाया °, महिषमर्दिन्या °, लक्ष्म्या °, सरस्वत्या ° गणेशस्य°, हरिद्रा-गणेशस्य° सूर्यस्य°, विष्णो °, श्रीरामस्य°, श्रीकृष्णस्य° गोपालस्य°, नृसिंहस्य°, शिवस्य°, वटुकस्य° भैरव्या °, श्रीविद्याया ° महात्रिपुरसुन्दर्याः°, प्रचण्डचण्डि काया °, काल्या °, ताराया ° बगलामुख्या °, चतुष्षष्ट्युपचारा, अष्टादशोप-चारा, षाडशोपचारा, दशोपचारा पञ्चोपचारा, निर्माल्यकथनम, त्रिपुर-सुन्दर्या षाड़शोपचारा, रुद्राक्षमाहात्म्यम, रुद्राक्षप्रतिष्ठा रुद्राक्षसंस्कार, परिभाषा, विषहाराधनमन्त्रा, विष्णुविषय नैमित्तिकादिकर्मभङ्गप्रायश्चित्तम, शिवशक्तिविषये नैमित्तिकादिकर्मभङ्गप्रायश्चित्तम, पञ्चप्रकार इज्या, वैष्णवानां द्वादशशुद्धि, द्वादशतिलकानि, यागाङ्गासनानि, मुद्रा, घटार्गलायन्त्रम, त्वरिता°, नवदुर्गा° लक्ष्मी° भैरवी°, त्रिपुरागायत्री°, त्रिपुरा°, श्रीविद्या° गणेश°, श्रीराम°, नृसिंह°, गोपाल°, कृष्ण°, शिव°, काली°, शान्तिकादौ तारायन्त्रम, यन्त्रलिखनद्रव्यम, शान्त्युदकस्नानम, षड्वेधप्रत सर्वदेवानां नित्यपूजाविधि, नैमित्तिकविधि, चरणामृतमाहात्म्यम् स्त्रीनपुंसकमन्त्राणां लक्षणम, शुभप्रबो धकाल, योगाङ्गासनानि, श्रीविद्यायजनम प्रयागविधि, भुवनेश्वरी°, त्वरिता°, दुर्गा°, सरस्वती°, लक्ष्मी°, गणेश° सूर्य°, श्रीराम°, कृष्ण°, दधिवामन° हयग्रीव°, नृसिंह°, वराह°, मृत्युञ्जय° दक्षिणमूर्ति°, भैरवी°, सुन्दरी°, त्रिपुरा°, छिन्न-मस्ता°, श्यामा°, काम्यतर्पणम, निग्रहाद्युपाधा, वेतालसिद्धि, बालकसंस्कार शान्तिमन्त्र, रागादिवलि, कुलाचार, दूतीयाग, यजनप्रकार, द्रव्यशुद्धि, शक्तिशोधनम्, वीराणां पुरश्चरणम, मन्त्रिणां मन्त्रस्थाननिरूपणम, सन्ध्या, आवपूजा, पञ्चमकारयजनप्रकार, तन्त्रक्रिया, ग्रन्थकृतत्कृतस्वदोषक्षमापण-चेति।

इह बहुतरयन्त्राणि चित्रितानि सन्ति ।

---

## No. 937. दुर्गभञ्जनम् ।

Substance, country yellow paper, 19 × 3½ inches. Folia, 84. Lines, 8 on a page. Extent, 4200 s'lokas. Character, Bengali. Date, Sk. 1729. Place of deposit, Navadvípa, Vrajanátha Vidyáratna. Appearance, old. Prose and verse. Correct.

*Durgabhañjana.* A treatise on Smṛiti rites, illucidating doubtful points, and solving many moot questions regarding proper times for performing particular ceremonies. By Chandras'ekhara S'armá, a Várendra Bráhmana of Navadvípa. The work is divided into four chapters, (lit. forts). The first treats of the age of the moon, and the proper times when particular ceremonies ordained for specifical days of the moon, should be performed. The second treats of months, their conjunctions, and the ceremonies appertaining to them. The third is devoted to resolutions to perform ceremonies, persons qualified to perform them, and the details thereof. Prominent mention is made in this chapter of the rules for commencing the Durgá pújá. The fourth has for its subjects, optional fasts and penances.

Beginning. भजत भजत कृष्णं गोपनारीसहायं
निखिलभुवनवन्द्यं नन्दगोपाभिनयम् ।
सुकृतिहृदयवन्द्यं प्रेमभक्त्यैकगम्यं
सकललळितगेहं सच्चिदानन्दगेहम् ॥
यासा माता मया किं नवदधि विहृत भुज्यते नेति मत्वा
दृष्ट्वा तद्वृत्तमाशु प्रियतमतनयाभुङ्ख वत्सेत्युवाच ।
लब्ध्वा मातुः प्रसादं सपदि गतभयं स्मेरवक्त्रं वदन्तं
मानदोषो न मेऽयं वल्लवतमिति त नन्दसूनुं नमामि ॥
सदानन्दमयीं स्मृत्वा चन्द्रशेखरशर्मणा ।
वरेन्द्रान्वयसम्भूतनवद्वीपनिवासिना ॥
श्रीकृष्णप्रीतये गूढशास्त्रार्थस्याभिसम्भितः ।
स्मृतीनां क्रियते दुर्गभञ्जनं बुधरञ्जनम् ॥
अथ तिथिदुर्गभञ्जनम् । तत्र, राशिचक्रचलनद्धयावधिकं वात्रयविकर्षप्रयो-
जकताद्दशचन्द्रक्रिया तिथिः । तथाहि—

End. वियोगे पारणं कुर्य्युर्मुनयो ब्रह्मवादिन इति । वियोगे उभयोर्विच्छेदे तद्योगस्य उपस्थितत्वात् स च एकतरदयादपि भवतीति ॥ ० ॥

Colophon. श्रीहरिनारायणशर्म्मणः पुस्तकमिदं स्वाक्षरञ्च इति ॥ ० ॥ यथा दृष्टमित्यादि ॥

विषयः । अत्र चत्वारि परिच्छेदाः । प्रथम तिथिदुर्गभञ्जनम् । तत्र राशिचक्रस्य देश-रूपता, अमापोडशभागेनेत्यादिवचनार्थः, अष्टम्यामे चतुर्दश्या इति वचन-व्याख्या,चन्द्रकलास्वरूप', देवताना कलानिर्णयः, तिथिखण्डविशेषनियमश्चेति। द्वितीयं मासादुल्लेखदुर्गभञ्जनम् । तत्र निमित्तोल्लेखविचारः, इष्टोत्वर्गादि-विचार', मासाद्युल्लेखविचारश्चेति । तदेतत् खण्डद्वयात्मकं प्रथमखण्डम्। सङ्कल्प-स्मृतिदुर्गभञ्जनाख्यतृतीयपरिच्छेदारम्भे पृथङ्मङ्गलाचरणदर्शनात्; तथाहि—"सदानन्दमयी भूत्वा चन्द्रशेखरशर्मणा । सङ्कल्पस्मृतिदुर्गाणां भञ्जन क्रियते-ऽधुना ॥" इति । तत्र च काम्यकर्मणि सङ्कल्पः, निष्कामानां काम्येऽपि सङ्कल्पा-भाव. सुगमसङ्कल्पः, अधिकारिलक्षणम्, विशिष्टफल प्रति कामनाधिकारः, काम्यकर्मणि रागिणां प्रीतिकामनायां तत्फलप्राचुर्य्यम्, सङ्कल्पनिरूपणम्, जन्मतिथिविहिताश्वत्थामादिपूजनफल, सङ्कल्पवाक्यरचना, सङ्कल्पवाक्ये फल-भागिन एव नामगोत्राद्युल्लेखो न तु प्रतिनिधेः, सङ्कल्पकालः, सप्तम्यादिमदाष्ट-म्यादिकल्पे पक्षद्वयं बोधनम्, विशेषबाधकाभाव एव प्रकरणाद्व वाक्यस्य बलव-त्वम्, दिवसाद्यन्तनाडीचतुष्टयस्य सन्ध्यात्वकीर्त्तनम्, सायसन्ध्यायाः प्राशस्त्या-दिकम्, उपवासासङ्कल्पकालः, मत्स्यान्ते पुनर्भोजनान्तरम्, ग्रहणनिमित्तक-स्नानादिकार्य्यम्, नैमित्तिकानि काम्यानि च कर्माणि चेति । चतुर्थं व्रतदुर्ग-भञ्जनम् । तत्र—अष्टमी, जन्माष्टम्युपवासो नित्यः,जन्माष्टम्युपवासफलम्, व्रतका-लव्यवस्था, पारणव्यवस्थादिश्चेति ।

---

## No. 938. प्रायश्चित्तव्यवस्थासङ्क्षेपः ।

Substance, country yellow paper, 19 × 3½ inches. Folia, 14. Lines, 6—7 on a page. Extent, 539 s'lokas. Character, Bengali. Date, Sk. 1728. Place of deposit, Navadvípa, Vrajanátha Vidyáratna. Appearance, old. Prose and verse. Correct.

*Práyas'chitta-vyavasthá-saṅkshepa.* A summary of the laws bearing on expiations. This and the following five works are evidently due to the same author, who attempted to produce a series of manuals like the *Tattvas* of Raghunandana, or the *Vivekas* of S'úlápani, but his name does not appear in the codices under notice.

Beginning. अथ प्रायश्चित्तव्यवस्थासङ्क्षेपः। तत्रादौ प्रायश्चित्तलक्षणम्। तथाच हारीतः। प्रयतत्वादोपचितमशुभं नाशयतीति प्रायश्चित्तम्।

End. तथाच पैठीनसि-ब्राह्मणादिना क्रियमाणा—(इतः खण्डितम्)

विषयः। प्रायश्चित्तलक्षणादि, पातकानि, अतिपातकप्रायश्चित्तम्, महापातकप्रायश्चित्तम्, ब्रह्मवधप्रायश्चित्तम्, सुरापानप्रायश्चित्तम्, स्वर्णस्तेयप्रायश्चित्तम्, गुर्वङ्गनागमनप्रायश्चित्तम्, पतितसंसर्गप्रायश्चित्तम्, गोवधप्रायश्चित्तम्, प्रायश्चित्तपूर्वाङ्गकृत्यम्, बाल्यादिभेदेन प्रायश्चित्तभेदः, ज्ञानकृतादिनिरूपणम्, ब्राह्मणस्वामिकगोवधप्रायश्चित्तम्, एकहायन्यादिगोवधप्रायश्चित्त, बोधनादिनिमित्तकगोवधप्रायश्चित्तम्, अपालननिमित्तकगोवधप्रायश्चित्तम्, गोवधापवादः, क्षत्रियादिवधप्रायश्चित्तम्, स्त्रीवधप्रायश्चित्तम्, गर्भवधप्रायश्चित्तम्, मार्जारादिवधप्रायश्चित्तं, मत्स्यादिवधप्रायश्चित्तम्, मण्डपोद्यानादिदेवतडागादिभेदनप्रायश्चित्तम्, अभिचारप्रायश्चित्तञ्चेति।

---

## No. 939. तिथिव्यवस्थासङ्क्षेपः।

Substance, country yellow paper, 18 × 3½ inches. Folia, 51. Lines, 6 on a page. Extent, 1836 s'lokas Character, Bengali. Date, Sk. 1729. Place of deposit, Navadvípa, Vrajanatha Vidyáratna. Appearance, old. Prose and verse. Correct.

*Tithi-vyavasthá-saṅkshepa.* A summary of the laws regarding the moon's age, with references to the ceremonies to be performed on particular lunar days.

Beginning. अथ सङ्कल्पानामेव कर्म्मणामारम्भकत्वादादौ स एव निरूप्यते।

End. अमावास्याष्टमीव्यतिरिक्ता द्वादशतिथयः शुक्ला ग्राह्याः। एतासु पौर्णमास्यमावास्ये ग्राह्ये॥

Colophon. इति तिथिव्यवस्थासङ्क्षेपः समाप्तः।

विषयः। सङ्कल्पनिरूपणम्, मलमासो रविसङ्क्रान्तिशून्यः, विधिश्चतुर्विधः, अर्थवादः, निषेधपर्य्युदासौ, विकल्पः, जन्मतिथिव्यवस्था, प्रतिपद्-द्वितीया-तृतीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तमी-कृत्यम्, माघसप्तमी, अष्टमी, कृष्णजन्माष्टमी, पारणकाल, दूर्वाष्टमी, भीष्माष्टमी, अशोकाष्टमी, नवमी, श्रीरामनवमी, दशमी, दुर्गोत्सवः, बलिदानम्, धूपाः, उपचाराः, षोडशोपचाराः, एकादशी,

